

महाकवि वसन्त त्र्यम्बक शेवडे

| | |
|---|---|
| पिता | : श्रीत्र्यम्बक लक्ष्मण शेवडे बी० ए०, एल्-एल्० बी०, एडवोकेट-जनरल तथा हाईकोर्ट जज, नागपुर |
| माता | : श्रीमती विमलाबाई |
| मातामह | : श्रीसदाशिव रामचन्द्र बखले, बम्बई हाईकोर्ट में एडवोकेट |
| जन्मतिथि | : २ अक्टूबर १९१७ ई० |
| जन्मस्थान | : बम्बई |
| निवासी | : नागपुर |
| अध्ययन-क्षेत्र | : अमरावती तथा नागपुर |
| परीक्षा | : एम० ए० ( अंग्रेजी माध्यम ) नागपुर-विश्वविद्यालय |
| अधीत विषय | : प्राचीन एवं नव्य न्याय, व्याकरण, साहित्य, मीमांसा आदि । |
| धार्मिक स्वरूप | : परमशैव |
| उपासक | : जगज्जननी पराम्बा भवानी |

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१७८



# अभिनव-मेघदूतम्

रचयिता

महाकवि-वसन्तत्र्यम्बकशेवडे

स्वोपज्ञसंस्कृतव्याख्या-हिन्दीभाषानुवादा-
ङ्ग्लभाषानुवादसहितम्

सम्पादक

**डॉ० ब्रह्मानन्द त्रिपाठी**

साहित्य-आयुर्वेद-आचार्य

एम. ए., पी-एच्. डी., डी. एस-सी. ए-वाइ.

सह-सम्पादक

**डॉ० गोविन्द सप्तर्षि**

एम्० ए० ( संस्कृत-हिन्दी ), साहित्याचार्य, पी-एच्० डी०



चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ५७२१४



प्रथम संस्करण १९९०

मूल्य ~~[illegible]~~ 700.00

अन्य प्राप्तिस्थान

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए. बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१

*

प्रधान वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक

**श्रीजी मुद्रणालय**

वाराणसी

THE

**CHAUKHAMBA SURBHARATI GRANTHAMALA**

**178**



# ABHINAVA-MEGHADŪTA

*Alongwith his own Sanskrit glossary and Hindi-English Translations*

By

**Mahakavi Vasant Tryambak Shevade**

*Editor*

**Dr. Brahmanand Tripathi**

Sahityacharya, Ayurvedacharya

M. A., Ph. D., D. Sc. Ay.

*Co-editor*

**Dr. Govind Saptarshi**

*M. A. ( Sanskrit & Hindi ), Sahityacharya, Ph. D.*



**CHAUKHAMBA SURBHARATI PRAKASHAN**

VARANASI

*( Oriental Publishers & Distributors )*
K. 37/117, Gopal Mandir Lane
Post Box No. 1129
VARANASI 221001
*Telephone : 57214*

First Edition
1990

*Also can be had of*
CHAUKHAMBA SANSKRIT PRATISHTHAN
38 U. A. Bungalow Road, Jawaharnagar
Post Box No. 2113
DELHI 110007
*Telephone : 236391*

*

*Sole Distributors*
CHOWKHAMBA VIDYABHAWAN
CHOWK ( Behind The Benares State Bank Building )
Post Box No. 1069
VARANASI 221001
*Telephone : 63076*

## काव्यकर्तुर्निवेदनम्

अक्रीतदासस्तुहिनांशुमौलेरशेषशास्त्रार्णवपारदृश्वा ।
वागीश्वरीलब्धवरप्रसादो जीयाद्वसन्तः कविसार्वभौमः ॥ १ ॥

किं बिह्लणोऽयं किमु कालिदासः किं शारदायाः पुरुषावतारः ।
आकर्ण्य यस्याऽद्भुतवाग्विलासं परस्परं पृच्छति विज्ञलोकः ॥२॥

माधुर्यधुर्यां रसभावपूर्णां सरस्वती यत्कवितां निशम्य ।
गण्डस्थलास्फालितकर्णपूरं सानन्दमान्दोलयति स्वशीर्षम् ॥ ३ ॥

प्रणम्य साहित्यविदः समस्तान् विज्ञापयत्येष कविर्वसन्तः ।
इदं भवन्तः परिशीलयन्तु काव्यं मदीयं नवमेघदूतम् ॥ ४ ॥

सहृदया गुणदोषपरीक्षका मधुरकाव्यरसग्रहणक्षमाः ।
मधुकरा इव पुष्परसज्ञतां प्रकटयन्तु निजां गुणगृह्यताम् ॥ ५ ॥

माहेश्वरं मञ्जुलवाग्विलासं पुत्रं तृतीयं जगदम्बिकायाः ।
वैदर्भरीतिः स्वयमेव वव्रे विदर्भदेशाभिजनं वसन्तम् ॥ ६ ॥

वैदेशिकौ बिह्लणकालिदासौ संश्रित्य वैदर्भगिरा चिराय ।
गुणानुरागादवृणोदिदानीमनन्यसामान्यगुणं वसन्तम् ॥ ७ ॥

स मेघदूतं कविकोकिलेन श्रीकालिदासेन पुरा प्रणीतम् ।
प्रीत्याऽनुकुर्वन्नकरोद् बुधानां मनोहरं नूतनमेघदूतम् ॥ ८ ॥

सम्यक् परिष्कृत्य ततस्तदेतद् व्याख्यानुवादैः सुहृदां नियोगात् ।
मनोज्ञरूपेण च मुद्रयित्वा समर्पयत्यद्य भवत्कराब्जे ॥ ९ ॥

आमूलचूलं तदिदं समीक्ष्य काव्यं मदीयं प्रणयाद् भवन्तः ।
दोषान् परित्यज्य गुणान् गृहीत्वा परिश्रमं मे सफलं विदध्युः ॥१०

ग्रन्थस्यास्य प्रातिभाष्ये निदानं साहित्याब्धेः पारदृश्वा त्रिपाठी ।
ब्रह्मानन्दो विश्वनाथप्रसादाज्जीव्यादायुर्वेदविद्वांश्चिराय ॥ ११ ॥

क्षोण्यब्धिशून्याक्षिमिते प्रसिद्ध-
श्रीविक्रमादित्यनराधिपाऽब्दे ।
प्रारब्धमेतत् खलु शुक्लपक्षे
षष्ठयान्तिथौ भाद्रपदे च मासे ॥ १२ ॥

वर्षे हि तत्राऽश्विनशुक्लपक्षे, षष्ठ्याम्तिथौ भानुमतश्च वारे ।
मासेन चैकेन तु मेघदूतप्रस्पर्धि पूर्णं नवमेघदूतम् ॥ १३ ॥

स्वर्गीयाः सुगृहीतनामधेया दिगन्तविश्रुतवैदुष्यकीर्तयः प्रोफेसर डॉक्टर श्रीचारुदेवशास्त्रिमहोदया महाकवीनां वसन्त त्र्यम्बकशेवडेमहोदयानां श्रीविन्ध्यवासिनीविजयमहाकाव्यं पठित्वा परमं प्रसन्नाः सन्तः पत्रद्वारा स्वाभिप्रायमेवं न्यवेदयन्। स तेषामभिप्रायो यद्यपि श्रीविन्ध्यवासिनी-विजयमहाकाव्यमवलम्ब्य प्रवृत्तस्तथापि स्थालीपुलाकन्यायेन शेवडेमहोदयानां सर्वाण्येव काव्यानि विषयीकरोतीति तेषां पत्रमामूलचूलमत्र समुद्ध्रियते—

ब्रह्मानन्दत्रिपाठिना

## प्रशस्तिपत्रम्

अयि महामहिमानो मन्नमस्याः कविवर्याः, वाराणसेयचौखम्बा-सुरभारतीप्रकाशनाधिकृतैरुपायनीकृतं सुकृतिभिः कृतिभिर्भवद्भिर्वि-निर्मितं विन्ध्यवासिनीविजयमहाकाव्यमामूलचूलमालुलोचं परितोषं च परममासीषदम्। भारतेऽस्मिन् वर्षे यत्र तत्र काव्यवदाभासमानान्य-विरलान्यन्तराऽन्तरा प्राकाश्यं लभन्ते काव्यानि, 'कवित्वं दुर्लभं लोक' इति भणितिं च सत्यापयन्ति। इयमेका भावत्कीकृतिः काव्यमित्यमायं वचः किं बहुना, इदं मेऽत्र दर्शनम्—

सुप्रसन्नपदन्यासः सर्वथौचित्यसंश्रितः।
प्रतिभोत्थः स सोऽर्थश्चाऽनवद्यः पद्यसञ्चयः॥
उपमाद्या अलङ्कारा अनुच्छिष्टाश्च हारिणः।
विदग्धजनसंवेद्यो ह्यद्भुतादी रसः स्थितः॥
इत्यपूर्वगुणग्रामं काव्येऽस्मिन् त्सत्तमे वयम्।
संलक्ष्य परमं प्रीता दृढं सत्यं च मन्महे॥
भासो वा कालिदासो वा कृतेरस्याः प्रणायकः।
स्वस्मिंस्तु कर्तृतारोपः शेवडेर्नोपपद्यते॥

आशासेऽर्हन्तो भवन्तोऽर्थ्यामिमां मत्कृतां स्वल्पां प्रशस्तिमभि-नन्दिष्यन्तीति। उत्तरोत्तरां भवतः तपःसिद्धिं भगवन्तमीशमर्थयमानो विरमाम्यहम्।

३/५४ रूपनगरम्, दिल्ली–७
दि० १३।२।१९८६ ई०

विदुषामाश्रवः
**चारुदेवः शास्त्री**

## संस्तवः

ये न स्पृष्टाः कविकुलगुरोः प्रज्ञया मेघदूते
कश्मीरेभ्यो मलयवलयं यावदीक्ष्याः प्रदेशाः ।
वाणीं वीणामिव मधुमुचं तान् दिशन्तीं वसन्ता-
दन्यः को वा सुकविरधुना भूतले सन्दधीत ॥ १ ॥
काव्यं कौतुकमेव केवलमिदं छन्दोविधौ कौशलीं
विन्यासे वचसां च संस्कृतमतिस्फीतं स्वतः सन्दधत् ।
नो चेत् कामिजनप्रमादकथया संवादमञ्चेत् कथं
तीर्थानां विविधात्मनां बत कथा सेयं वसन्तोत्थिता ॥ २ ॥
शास्त्राणां कविताङ्गना प्रणयिनामाविर्बुभूषावधू-
र्यान् वै संवरणस्रजा कविवरान् संभाव्य धन्यायते ।
सङ्ख्यानेषु कनिष्ठिकामुपगतं तेषामिदं त्र्यम्बका-
पत्यं न्यक्कुरुतां पुमानिति तु को ज्योतिस्तु तत् केवलम् ॥ ३ ॥
श्रीमानेष महाकविः कवितया मथ्नाति पूर्वं जग-
न्मातुश्चेतसि विद्यमानमसमं वात्सल्यवारान्निधिम् ।
पश्चात् तन्नवनीतकल्पममृतस्यन्दि द्वयोत्थाऽद्वय-
प्राग्भारि क्षरगर्भमक्षरमलं भावोत्तरं स्वं महः ॥ ४ ॥
नासौ कोऽपि कविः, स्वयं वृतवती यं शारदा कच्छपी-
स्रग्ग्रन्थाभयदानमुद्रितकरा वात्सल्यतोऽस्त्येष सः ।
देवः कश्चन भारतस्य महतो लेखाध्वरे यन्मुखं
शुण्डादण्डकरम्बनां कलयते स्फीतार्थसार्थाक्षराम् ॥ ५ ॥
विश्वं यस्य कृते विवर्त्तसरसी-व्यक्ताभ्रपङ्केरुह-
प्रख्यं केवलमस्ति, नास्ति च तथाप्यात्यन्तिकाभावभूः ।
सोऽयं कोऽपि महामहेश्वर इह क्षोणीतलं काशिका-
प्रीत्या हन्त वसन्तविग्रहतया संमण्डयन् द्योतते ॥ ६ ॥
कां वा त्र्यम्बकसूनवे कविवरायाऽस्मै वसन्ताक्षरै-
र्याथार्थ्येन विभूषिताय कवितां कुर्वीय सानातनः ।
सा वै दीपगभस्तिभिर्दिनमणेः सम्भावना केवलं
तस्मात् सौस्थ्यमुमापतिं कृतिवरायास्मै तु याचामहे ॥ ७ ॥

**रेवाप्रसादद्विवेदिनः**
प्राच्यविद्यासङ्कायस्थसाहित्यविभागाध्यक्षस्य
काशीहिन्दूविश्वविद्यालयः, वाराणसी ।
दि० २८ अप्रैल, १९९०

## महाकाव्यरचयितुः परिचयः

लोकोत्तरचरित्रवतां सतां विशेषविदुषां महाकविप्रभृतीनां च जन्म संसारिणां कस्मैचन श्रेयसे एव सम्भवति, एतादृशेष्वेव पुण्यचरितेष्वन्यतमं स्थानं वर्वर्ति महाकविशेवडेमहाभागस्य। विद्याशेवधिरयं महाराष्ट्रान्तर्गतसतारानगराभिजनः। नगरमिदं गो-ब्राह्मणप्रतिपालकस्य क्षत्रियकुलावतंसस्य च्छत्रपतिशिवाजीमहाराचस्य वंशजानां राजधानीरूपेण चिरात् विराजतेस्म। छत्रपते राजसभायां शेवडेकुलजाः सम्मानितपदमधिरूढा राजनीतिकुशलाश्चेति सुविदितम्। एकोनविंशतिशताब्द्याः प्रारम्भे परस्परकलहक्षीणबलं मराठासाम्राज्यं कथाशेषतां गतम्: अवशिष्टैराङ्ग्लशासकानां स्वामित्वं स्वीकृतम्।

तदनु प्राप्तपाश्चात्यशिक्षः शेवडेमहोदयस्य पितामहो मध्यप्रदेशीये राजकीयविद्यालये प्रधानाध्यापकरूपेण नियुक्तः। तदानीं शेवडेवंशीयाः प्राचीनमध्यप्रदेशस्य सम्प्रति महाराष्ट्रान्तर्गतविदर्भदेशस्य निवासिनः समभवन्।

श्रीशेवडेतातपादः श्रीत्र्यम्बकलक्ष्मणशेवडेमहोदयो बी. ए., एल. एल. बी. उपाधिमधिगत्य अधिवक्तृपदञ्च समवाप्य प्रारम्भे अमरावतीनगर्या पश्चाच्च नागपुरे व्यवहाराजीवकार्यं प्रारब्धवान्। स मेधावी प्रतिभासम्पन्नश्चासीत्। अतएव किञ्चित्कालान्तरं स महाधिवक्तृपदं ( एडवोकेट-जनरल ) तदनन्तरं न्यायमूर्ति (हाईकोर्ट जज) पदं च सादरं लब्धवान्। शेवडेमहोदयस्य मातुर्नाम आसीत् 'विमलाबाई'। इयं वाईनगरस्थे बखले कुले जन्म लेभे। शेवडेमहोदयस्य मातामहः श्रीसदाशिवरामचन्द्रबखलेमहाशयो मुम्बापुरीस्थे उच्चन्यायालये ख्यातनामा अधिवक्ता ( एडवोकेट ) आसीत्।

श्रीशेवडेमहोदयस्य जन्म मुम्बापुर्यां स्वकीयमातामहसदने अक्टूबरमासस्य द्वितीयायां तारिकायां १९१७ तमे ईशवीयाब्दे समभवत्। भवतः प्रारम्भिकमध्ययनम् अमरावत्यां तत्पश्चात्कालिकञ्च नागपुरे पूर्तिमगच्छत्। भवता नागपुरविश्वविद्यालयतः १९४१ ई० वर्षे एम. ए. परीक्षा ससम्मानं समुत्तीर्णा। भवतो मातृ-पितृकुलं संस्कृतानुरागि आसीत्। अतएव पारम्परिकसंस्कारवशाद् बाल्यकालादेव भवतोऽपि संस्कृतेऽनुरागः स्वाभाविक आसीत्। अतएव भवता प्राचीनपद्धत्या गुणौघगुरुभ्यः सद्गुरुभ्यः साहित्य-न्याय-व्याकरणप्रभृत्यनेकशास्त्राणां यथाविधि ज्ञानमधिगतम्, येषां स्वाध्यायोऽद्यावधि सन्ततं प्रचलत्येव।

श्रीशेवडेमहाभागः प्रारम्भे मराठीभाषामाश्रित्य पद्यरचनां प्रारब्धवान्। कालान्तरे संस्कृताभ्यासनिपुणो नैकविधानि काव्यानि प्राणैषीत्। कवेः कुलं

भगवतीभवानीपतेः समुपासकम् । भवतः कुलदेवता जगन्माता श्रीदुर्गा वर्वर्ति । अतः स्तोत्ररूपेण महाकाव्यरूपेण च भवता भगवती दुर्गा कामं समाराधिता ।

**कृतिपरिचयः—**

१. **रघुनाथतार्किकशिरोमणिचरितम्**—अयं सुप्रसिद्धो नैयायिकः । अस्य चरितस्य प्रथमं प्रकाशनं सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य सारस्वतीसुषमा-पत्रिकायां समजनि, तदनन्तरं स्वतन्त्र-पुस्तकरूपेण च समभवत् ।

२. **वृत्तमञ्जरी**—अत्र शताधिकवृत्तानां लक्ष्य-लक्षणानां सरलया सुरगिरा निर्देशः कृतो वर्तते । तत्रोदाहरणरूपेण समुपन्यस्तानि सर्वाण्यपि पद्यानि भगवती-स्तुतिपरकाणीति ग्रन्थकर्तुर्वैशिष्टयम् । छन्दोज्ञानप्रकाशिका नूनमेषा अनन्य-साधारणा कृतिः । अत्र स्वोपज्ञावृत्तिर्विषयं विशदयति । अस्याःप्रशंसा काशीस्थ-विद्वत्तल्लजैरहमहमिकया कृता बाभाति ।

३. **विन्ध्यवासिनीविजयमहाकाव्यम्**—दुर्गाभक्तिवंशवदेन तदीयप्रेरणया प्रणुन्नेन शेवडेकुलभूषणेन विरचितमभिनवकाव्यमिदं कवेः प्रतिभावैशद्यं पिशु-नयति । अत्र सर्वत्र प्रसादगुणस्य वैदर्भीरीतेश्च साम्राज्यं पठतां शृण्वतां च मनांसि सममेव पुलकयति । अस्य पद्यसङ्ख्या १०३९, सर्गाश्च षोडशमिताः । महत्प्रमोदस्थानमिदं यद् २०४० वैक्रमे वर्षे **'उत्तरप्रदेश-संस्कृत-अकादम्या'** काव्यमेतत् **'कालिदासाभिधेन'** सर्वोच्चपुरस्कारेण सभाजितम् । तदनन्तरं दिल्ली-स्थितया **साहित्य-अकादम्या** अपि महाकाव्यमिदं पुरस्कारप्रदानेन बहुलीकृतम् ।

४. **शुम्भवधमहाकाव्यम्**—अनल्पकल्पनाशिल्पिना महाकविना महाकाव्य-स्यास्य कथावस्तु स्थाने समुपबृंहितम् । अस्य श्लोकङ्ख्या ८१६, सर्गाश्च चतुर्दशमिताः । महाकाव्यद्वयेऽपि विविधवृत्तानां प्रयोगाः कवेश्छन्दोवशंवदतां सूचयन्ति । उभयत्र अनुष्टुप्छन्दसः प्रयोगः क्वापि नाश्रितः । संस्कृतवाङ्मये दुर्गाचरित्रमाश्रित्य लिखितमेतत् काव्यद्वयं नूनमनुच्छिष्टं सारस्वतवैभवम् ।

५. **स्तवमञ्जूषा**—अत्र षट्त्रिंशत्स्तोत्राणि सन्ति, येषु स्तोत्रकर्तुः स्वा-भाविकी भक्तिः स्वच्छन्दं विरहन्ती पाठकानां हृदयेषु कमप्यलौकिकं सुखातिशयं सन्तनोति । अत्र सम्पूर्णश्लोकसङ्ख्या ९७३ परिमितास्ति ।

६. **अभिनवमेघदूतम्**—महाकविकालिदासकृतमेघदूतप्रस्पर्धिखण्डकाव्यमि-दम् । यन्महाकविना मासैकमात्रेण स्वल्पीयसाऽनेहसा सन्निबद्धं सत् कालिदासी-यमेघदूतस्य कथावस्तु सर्वात्मनाऽतिशेते । काव्यमिदं पूर्वोत्तरमेघभेदेनद्विधा विभक्तम् । अस्य श्लोकसङ्ख्या ९०+६८=१५८ परमिता । अत्र विप्रल-म्भाऽऽख्यः शृङ्गारः कविप्रयुक्तसरसोदात्तभावैः परां पुष्टिं प्रपन्नो जगन्मातुः कृपाकटाक्षेण सुलभां शेवडेमहाभागस्य स्वाभाविकीं लोकोत्तराञ्च कवित्वशक्तिं समुद्घोषयति ।

७. **श्रीकृष्णचरितम्**—नागपुरतः प्रकाशितं प्रसन्नमधुरं वैदर्भीरीतिमण्डितं शतश्लोकात्मकं खण्ड-काव्यमिदम् ।

८. **श्रीमोतीबाबाजामदारचरितम्**—इदमपि लोकोत्तरलक्षणलक्षितं सन्त-चरितात्मकं खण्डकाव्यं नागपुरात् प्रकाशपदवीं प्राप्तम् । इतः परं शेवडेमहाभाग-विरचितकृतीनां प्रकाशनम् एवं क्रमेण सम्पत्स्यते ।

**साहित्यशास्त्रसम्बन्धिनीरचना**— 'देवदेवेश्वरमहाकाव्यम्', काव्यमेतत् पञ्चदशसर्गात्मकं पुण्यपत्तनस्थदेवदेवेश्वरसंस्थानपरिचयात्मकम् । पुण्यश्लोकच्छत्र-पतिश्रीशिवाजीमहाराजमारभ्य पेशवाकुलोत्पन्नबालाजीबाजीरावपर्यन्तं महा-राष्ट्रेतिहासवर्णनात्मकं वीररसप्रधानमैतिहासिकं महाकाव्यम् । अमुष्य प्रकाशनं पुण्यपत्तनादचिरादेव बोभविष्यतीति नः प्रमोदस्थानम् ।

**व्याकरणशास्त्रसम्बन्धिनीरचना** — 'स्फोटतत्त्वनिरूपणतत्त्वप्रकाशिका' व्याकरणशास्त्रप्रसिद्धस्य स्फोटतत्त्वस्य रहस्यं करामलकवत् प्रकाशयन्ती श्रीशेष-कृष्णविरचितस्य 'स्फोटतत्त्वनिरूपण'स्य विशदार्थबोधिनीयं व्याख्या ।

**न्यायशास्त्रसम्बन्धिनीरचना**—'न्यायकुसुमाञ्जलेस्तत्त्वप्रकाशिका व्याख्या' श्रीमदुदयनाचार्यविरचितस्य प्रमाणपूर्वकमीश्वरसिद्धिपरस्य सुप्रसिद्धस्य न्याय-कुसुमाञ्जलिग्रन्थस्य न्यायशास्त्रविदुषां तदितरशास्त्रज्ञानाञ्च समानरूपेण हृदय-हारिणी विशदार्थप्रकाशिनीयं व्याख्या । भविष्यति काले च महाकवेरन्याः महत्त्वपूर्णाः कृतयः क्रमेण यथायथं प्रकाशपदवीं यास्यन्ति ।

परममाहेश्वरेण शेवडेकुलसम्भवेन महाकविना श्रीमद्वसन्तशर्मणा नागपुरं विहाय सम्प्रति काशीवासमुररीकृत्य ब्राह्मणोचितं सकलं दैनिकं कर्म स्वाध्याया-ध्यापनादिकञ्च कुर्वता सर्वात्मना साम्बः शिवः सेव्यते ।

**डॉ० ब्रह्मानन्दत्रिपाठी**

## शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५ | ४ | द्रक्ष्यसि | द्रक्ष्यति |
| २५ | १६ | द्रक्ष्यसि | द्रक्ष्यति |
| २५ | १६ | अवलोकयिष्यसि | अवलोकयिष्यति |
| ३० | १६ | सन्तति-क्षेत्र | सन्नति-क्षेत्र |
| ३९ | ८ | स्वादिष्ट | स्वादिष्ठ |
| ४५ | २५ | wili | will |
| ५० | २२ | htis | this |
| १०२ | २१ | lasting | tasting |
| ११३ | ३ | औदासीन्य | औदासीन्यं |
| १३० | २४ | heaeted | heated |
| १५३ | १८-१९ | सुख-होता है, | सुखदायक होता है, |
| १५३ | १९-२० | छाया दायक अत्यन्त | छाया अत्यन्त |
| १५६ | ५ | रचना | रचनां |

।। श्रीः ।।

महाकवि-वसन्तत्र्यम्बकशेवडेप्रणीतं

# अभिनव-मेघदूतम्

---

## पूर्वमेघः

काश्मीराणामवनिपतिना प्रेषितः स्वात्मकार्ये
कश्चिद् दूतो मलयवलयक्षोणिभर्तुः सभायाम् ।
तत्र स्नेहप्रवणमनसस्तस्य राज्ञो नियोगात्
कञ्चित्कालं वसतिमकरोत् सौधदेशे तदीये ।। १ ।।

**अन्वयः**—काश्मीराणाम् अवनिपतिना स्वात्मकार्ये मलयवलयक्षोणिभर्तुः सभायां प्रेषितः कश्चिद् दूतः तत्र स्नेहप्रवणमनसः तस्य राज्ञः नियोगात् तदीये सौधदेशे कञ्चित् कालं वसतिम् अकरोत् ।

**व्याख्या**—काश्मीराणामिति, काश्मीराणामवनिपतिना राज्ञा अनन्तदेवेन, 'पतिः समास एव' इति घिसंज्ञा । 'आङो नाऽस्त्रियाम्' इति नाभावः । स्वात्मकार्ये स्वकार्ये, मलयवलयस्य मलयदेशस्य, क्षोणिभर्तुः राज्ञः सभायां प्रेषितः कश्चिद-निर्दिष्टनामा, दूतः सन्देशहरः, 'स्यात् सन्देशहरो दूतः' इत्यमरः । तत्र मलयदेशे, स्नेहे प्रवणं प्रसक्तं मनो हृदयं यस्य तस्य राज्ञः नियोगादादेशात्, तदीये तस्य, सौधदेशे सौधे राजसदने, सौधोऽस्त्री राजसदनम्' इत्यमरः । कञ्चित्कालं कियत्कालपर्यन्तं, वसतिं निवासम्, अकरोत् चकार । छन्दः—अस्मिन् काव्ये सर्वत्र मन्दाक्रान्तावृत्तम् । तल्लक्षणम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौंनतौ ताद् गुरू चेत्' इति ।

**हिन्दी**—महाराजाधिराज काश्मीर-नरेश अनन्तदेव ने अपने कार्य के लिए किसी ( विश्वासपात्र ) दूत को मलय देश के राजा की सभा में भेजा, ( वह ) वहाँ के स्नेह-परायण उस राजा की आज्ञा से उनके महल में कुछ समय तक रहा ।

*English trans* : Anantdev the king of Kashmir sent his ambassador to the court of the king of Malaya. There that ambassador became a favourite of the king of Malaya and on his request lived in his palace for some time.

मत्वा तस्यां सदसि नृपतेः कार्यसिद्धौ विलम्बं
स्मृत्वा भार्यां चिरविरहिणीं विद्यमानां विदूरे ।
जातश्चिन्ताकुलमतिरसौ, संश्रितश्चन्द्रशाला-
मागच्छन्तं नभसि जलदं प्रावृषेण्यं ददर्श ॥ २ ॥

**अन्वयः**—तस्यां नृपतेः सदसि कार्यसिद्धौ विलम्बं मत्वा विदूरे विद्यमानां चिरविरहिणीं भार्यां स्मृत्वा, चिन्ताकुलमतिः जातः चन्द्रशालां संश्रितः असौ नभसि आगच्छन्तं प्रावृषेण्यं जलदं ददर्श ।

**व्याख्या**—मत्वेति । नृपतेः राज्ञः, तस्यां सदसि सभायाम्, कार्यसिद्धौ विलम्बं मत्वा विज्ञाय, चिरविरहिणीं चिरं विरहयुक्ताम्, काश्मीरेभ्यो मलयविषयस्य दविष्ठत्वात् प्रवासतद्देशवासादिना विरहस्य चिरकालिकत्वम् । विदूरे काश्मीरेषु, विद्यमानां वर्तमानाम्, भार्यां पत्नीम्, स्मृत्वा संस्मृत्य, चिन्तयाऽऽकुलामतिर्यस्य सः, मां विना कथमेकाकिनी निवसेदित्यालोच्य । मनोविनोदार्थं चन्द्रशालां सौधोपरिभागम्, 'चन्द्रशाला शिरोगृहम्' इत्यमरः । संश्रितः, नभसि गगने, आगच्छन्तं प्रावृषेण्यं वर्षाकालिकं 'प्रावृष एण्यः' इत्येण्य-प्रत्ययः । जलदं मेघम्, ददर्श अपश्यत् ।

**हिन्दी**—उस राजा की सभा में अपने कार्य की सिद्धि में कुछ विलम्ब होते देखकर सुदूर काश्मीर देश में रहने वाली चिर-विरहिणी अपनी पत्नी का सहसा स्मरण होने से चिन्ताकुल बुद्धि वाला वह दूत अपने मन को बहलाने की इच्छा से राजमहल की छत पर चढ़ गया, वहाँ से उसने आकाश में मँडराते हुए वर्षाकालिक मेघ को देखा ।

*English trans* : He considered that it will take a long time to accomplish his work in the court. Having thought of his wife who was separated from him since a long time and was far off in Kashmir, he became worried about her while he was standing on the roof he saw a new cloud coming in the sky.

दृष्ट्वा मेघं मनसि विमृशन् यक्षसन्देशवृत्तं
हर्षोत्फुल्लो निजमयमपि प्रेषयिष्यन्नुदन्तम् ।
आहूयोच्चैर्गगनसरणौ मन्थरं सञ्चरन्तं
नामग्राहं विनयमसृणः सादरं तं जगाद ॥ ३ ॥

**अन्वयः**—मेघं दृष्ट्वा मनसि यक्षसन्देशवृत्तं विमृशन् हर्षोत्फुल्लः निजम् अपि उदन्तं प्रेषयिष्यन् अयं गगनसरणौ मन्थरं सञ्चरन्तं तम् उच्चैः नामग्राहम् आहूय विनयमसृणः सादरं जगाद ।

**व्याख्या**—दृष्ट्वेति । मेघं दृष्ट्वा, मनसि चित्ते, यक्षसन्देशवृत्तम्—पूर्वं रामगिरौ स्थितेन यक्षेण मेघद्वारा प्रेषितः यः सन्देशस्तस्य वृत्तं वार्त्तां, विमृशन् विचारयन्, हर्षोत्फुल्लः आनन्दयुक्तः, निजमपि स्वकीयमपि, उदन्तं वृत्तम्, 'वार्ताप्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । प्रेषयिष्यन् अयम्, गगनमेव सरणिः मार्गः, तत्र मन्थरं मन्दं सञ्चरन्तम्, तं मेघम्, नामग्राहं नाम गृहीत्वा, यद्यपि मेघस्य विशेषतो नामज्ञानं दूतस्य तस्य न सम्भवति, तथापि 'हे मेघ' इति सम्बोधनं युज्यते, गगने सञ्चरतां हंसकाकगरुडादीनां मध्ये अनेन नाम्ना मेघस्य निर्धारणं सम्भवति । निर्धारणं नाम्नः कार्यम्, 'नाम्न्यादिशिग्रहोः' इति सूत्रेण द्वितीयान्ते नाम्नि उपपदे ग्रहेर्णमुल् । उच्चैः उच्चस्वरेण आहूय, विनयेन मसृणः स्निग्धः, 'चिक्कणं मसृणं स्निग्धम्' इत्यमरः । सादरं जगाद उवाच ।

**हिन्दी**—उस( मेघ )को देखकर 'यक्ष ने मेघ द्वारा अपनी विरहिणी पत्नी को सन्देश भेजा था' यह स्मरण हो आया, तब वह भी प्रसन्न होकर मेघ के माध्यम से अपनी पत्नी को अपना कुशल समाचार भेजने की इच्छा करता हुआ, आकाश में मन्दगति से संचार करने वाले उस( मेघ )से हे मेघ ! इस प्रकार ऊँचे स्वर से नाम लेकर नम्रता से बातें करता हुआ आदरपूर्वक कहने लगा ।

*English trans* : When he saw the cloud he remembered that the cloud had once carried the message of the Yaksh. He was happy because he thought that he can also send his message through the cloud. He loudly called the cloud who was going slowly in the sky and spoke to him politely and respectfully.

हंहो अम्भोधर ! जलनिधेस्तोयभारं गृहीत्वा
सर्वामुर्वीं व्रजसि नितरामार्द्रयन्नुत्तराशाम् ।
यक्षस्य त्वां प्रियसखमहं प्रत्यभिज्ञाय याचे
को वा त्वादृश्युपकृतिपरे प्रत्ययं न प्रयाति ॥ ४ ॥

**अन्वयः**—हंहो अम्भोधर ! त्वं जलनिधेः तोयभारं गृहीत्वा सर्वाम् उर्वीं नितराम् आर्द्रयन् उत्तराशां व्रजसि । अहं त्वां यक्षस्य प्रियसखं प्रत्यभिज्ञाय याचे । उपकृतिपरे त्वादृशि को वा प्रत्ययं न प्रयाति ।

**व्याख्या**—हं हो इति । हंहो भोः, अम्भोधर ! मेघ ! 'ओत्' इति सूत्रेण हंहो इत्यस्य प्रगृह्यसंज्ञा, 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावः । त्वं जलनिधेः समुद्रात्, तोयभारं जलभारम्, गृहीत्वा आदाय, सर्वां निखिलाम्, उर्वीं पृथ्वीम्, नितरामत्यन्तम्, आर्द्रयन् सेकेनाऽऽर्द्रां कुर्वन्, उत्तराशामुदीचीम्, व्रजसि गच्छसि । अहं त्वां यक्षस्य रामगिरौ स्थितस्य प्रसिद्धस्य, प्रियश्चासौ सखा च प्रियसखस्तम्, 'राजाहःसखिभ्यष्टच्' इति टच् प्रत्ययः । प्रत्यभिज्ञाय ज्ञात्वा, पूर्वं शाब्दज्ञानस्य सत्त्वात् साम्प्रतं प्रत्यक्षज्ञानेन प्रत्यभिज्ञा युज्यते । याचे स्वसन्देशहरणार्थं प्रार्थये । ननु अपरिचिते मेघे प्रत्याख्यानभयाद् याचना नोचितेत्याह—उपकृतिपरे उपकारपरायणे, त्वादृशि त्वत्सदृशि, को वा प्रत्ययं विश्वासं, न प्रयाति करोति । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः ।

**हिन्दी**—हे मेघ ! तुम समुद्र से जल-समूह को लेकर वृष्टि द्वारा सम्पूर्ण पृथ्वी को गीली करते हुए उत्तर दिशा की ओर जा रहे हो, मैं यक्ष का प्रिय मित्र समझकर तुमसे प्रार्थना कर रहा हूँ, अपरिचित होने पर भी तुम्हारे जैसे परोपकार-परायण व्यक्ति पर कौन विश्वास नहीं करेगा ?

*English trans* : Oh cloud ! You collect the water from the ocen and travel to the north pouring it in showers on the earth, I have recognised you. You are the same cloud dear friend of the Yakha. So I want to ask you for something. Who will not trust a person like you so obliging ?

काश्मीराख्यो भुवि जनपदः शारदाया निवास-
स्तत्रत्योऽहं मलयविषयं स्वामिकार्यादुपेतः।
अस्मिन् कार्यव्यतिकरवशाद् दीर्घकालं निरुद्धः
स्मारं स्मारं विरहविकलां गेहिनीं चिन्तितोऽस्मि ॥ ५ ॥

**अन्वयः**—भुवि शारदाया निवासः काश्मीराख्यः जनपदः ( अस्ति )। तत्रत्यः अहं स्वामिकार्यात् मलयविषयम् उपेतः ( अस्मि )। अस्मिन् कार्य-व्यतिकरवशात् दीर्घकालं निरुद्धः विरहविकलां गेहिनीं स्मारं स्मारं चिन्तितः अस्मि।

**व्याख्या**—काश्मीरेति। भुवि पृथिव्याम्, शारदायाः सरस्वत्याः, निवासो वसतिस्थानम्, काश्मीराख्यः जनपदो देशः, अस्तीति शेषः। तत्रत्यः तत्र भवः, 'अव्ययात् त्यप्' इति त्यप्। अहं स्वामिनः कार्यात् मलयविषयं मलयप्रदेशम्, उपेतः आगतः, अस्मीति शेषः, अस्मिन् कार्याणां व्यतिकरः प्राचुर्यं तद्वशात्, दीर्घकालं निरुद्धः अत्र प्रसक्तः, विरहेण विकलां विह्वलाम्, गेहिनीं गृहिणीम्, स्मारं स्मारं स्मृत्वा स्मृत्वा 'आभीक्ष्ण्ये णमुल् च' इति णमुल्। 'नित्यवीप्सयोः' इति द्वित्वम्। चिन्तितः चिन्ताव्याकुलः अस्मि।

**हिन्दी**—इस भूतल पर सरस्वती का सुप्रसिद्ध निवासस्थान काश्मीर नामक देश है, मैं वहीं का निवासी हूँ, अपने स्वामी का कार्य करने के लिए मैं ( इस ) मलयदेश में आया हूँ, यहाँ कार्य की अधिकता होने के कारण मुझे बहुत समय तक रुकना पड़ गया है, अतः मैं अपनी विरहिणी पत्नी का बार-बार स्मरण कर अत्यन्त चिन्तित हो गया हूँ।

*English trans* : There is a country called Kashmir which is the abode of the goddess of learning. I belong to that region. I have come to Malaya province on a mission of my master. Here I have been confined owing to the burden of the work. I am very much worried about my wife who is separated from me.

आलोक्य त्वां जगदुपकृतौ दूरदेशादुपेतं
तृष्णाक्रान्तैश्चिरपरिचितैश्चातकैः सन्निरुद्धम् ।
त्वत्तो ग्रीष्मक्षितिरुह इव प्राप्य निष्यन्दबिन्दून्
लब्ध्वाऽऽश्वासं पुनरपि सखे ! नूनमुज्जीवितोऽस्मि ॥ ६ ॥

**अन्वयः**—हे सखे ! जगदुपकृतौ दूरदेशात् उपेतं तृष्णाक्रान्तैः चिरपरिचितैः चातकैः सन्निरुद्धं त्वाम् आलोक्य ग्रीष्मक्षितिरुहः इव त्वत्तः निष्यन्दबिन्दून् प्राप्य आश्वासं लब्ध्वा नूनं पुनरपि उज्जीवितः अस्मि ।

**व्याख्या**—आलोक्येति । हे सखे ! जगदुपकृतौ जगतः उपकारार्थम्, दूर-देशात् उपेतम् आगतम्, चिरपरिचितैः तृष्णाक्रान्तैः—तृष्णया पिपासया, आक्रान्तैः व्याकुलैः, चातकैः प्रसिद्धैः पक्षिभिः, सन्निरुद्धं समन्तात् वेष्टितम्, एतेन तव परोपकारपरायणत्वं सर्वत्र चिरं प्रसिद्धमिति सूचितम् । ग्रीष्मक्षिति-रुहः ग्रीष्मकाले शुष्कप्रायः वृक्ष इव, त्वत्तो निष्यन्दस्य संसिक्तजलस्य, बिन्दून् कणान्, प्राप्य आसाद्य, आश्वासमाश्वासनं लब्ध्वा, नूनं निश्चयेन, पुनरपि उज्जीवितः जीवितं प्रापितः अस्मि ।

**हिन्दी**—हे मित्र ! संसार के प्राणियों पर उपकार करने के कारण दूर देश से आये हुए, प्यासे तथा चिरपरिचित चातकपक्षियों से घिरे हुए तुमको देखकर ग्रीष्मकालिक वृक्ष के समान तुमसे नयी जल की बूँदों और आश्वासन को पाकर मैं सचमुच फिर से जीवित हो गया हूँ ।

*English trans* : Oh friend ! You have come from a long distance to oblige the world. You are surrounded by the thirsty chatak birds who are acquainted with you since long time. Having seen you and by getting a few drops of rain from you, I have been assured and given a new life like a tree which is parched by the summer.

सन्देशं त्वं जलधर ! पुरा गुह्यकेन प्रदिष्टं
गत्वा दूरं धनदनगरीं प्रापयस्तत्प्रियायाः ।
प्रत्याख्यातुं प्रभवसि कथं प्रार्थनां तन्मदीयां
नार्ऽर्थिष्वेवं प्रकृतिमहतां भिद्यते दातृभावः ॥ ७ ॥

**अन्वयः**—हे जलधर ! त्वं पुरा गुह्यकेन प्रदिष्टं सन्देशं दूरं धनदनगरीं गत्वा तत्प्रियायाः प्रापयः । तत् मदीयां प्रार्थनां प्रत्याख्यातुं कथं प्रभवसि ? प्रकृतिमहताम् अर्थिषु एवं दातृभावः न भिद्यते ।

**व्याख्या**—सन्देशमिति । हे जलधर ! मेघ ! त्वं पुरा गुह्यकेन यक्षेण, प्रदिष्टं सन्देशं वाचिकं 'सन्देशवाग् वाचिकं स्यात्' इत्यमरः । दूरं धनदस्य कुबेरस्य, नगरीं पुरमलकां गत्वा, तत्प्रियायाः पत्न्याः, प्रापयः प्रापितवान् । शेषे षष्ठी । प्रपूर्वकात् आप्लृधातोर्णिजन्ताल्लुङ्, मध्यमपुरुषैकवचनम्, तत् तस्माद् हेतोः, मदीयां मम प्रार्थनां, प्रत्याख्यातुमनङ्गीकर्तुं, कथं केन प्रकारेण प्रभवसि ? न केनापीति भावः । प्रकृत्या स्वभावेन, महतां जनानाम्, अर्थिषु याचकेषु, एवमित्थं, दातृभावः दातृत्वं न भिद्यते, अर्थात् सर्वत्र तुल्यमेव तेषां दातृत्वम् । तेन कस्यचिद् याचना पूरणीया कस्यचिन्नेति भेदस्तेषु सर्वथा न सम्भवति ।

**हिन्दी**—हे जलधर ( मेघ ) ! पहले तुमने यक्ष द्वारा दिये हुए सन्देश को कुबेर की नगरी ( अलका ) में जाकर उसकी पत्नी के पास पहुँचाया था, तो तुम मेरी प्रार्थना का अनादर कैसे कर सकते हो ? अर्थात् इस बार मैं अपनी पत्नी को आश्वस्त करने के लिए जो सन्देश भेज रहा हूँ, उसे भी मेरी पत्नी को सुना देना, क्योंकि स्वभाव से ही महान् प्रकृतिवाले पुरुष दान के अवसर पर याचकों के साथ भेद-भाव नहीं रखते ।

*English trans* : Oh cloud ! Formerly you have carried the message of the Yaksha to Alaka and conveyed it to his beloved Then how can you reject my request ? The generosity of really great persons does not vary in this way towards their suitors.

काश्मीरेषु प्रवरपुरमित्यस्ति या राजधानी
रम्योद्यानैर्धनिकभवनैः स्वर्गसाम्यं वहन्ती।
मार्गं तस्या निशमय सखे ! भूतलं भूषयन्त्याः
सन्देशं च श्रवणयुगले कर्णपूरीकुरु त्वम् ॥ ८ ॥

**अन्वयः**—हे सखे ! काश्मीरेषु रम्योद्यानैः धनिकभवनैः स्वर्गसाम्यं वहन्ती या प्रवरपुरमिति राजधानी अस्ति, भूतलं भूषयन्त्याः तस्याः मार्गं त्वं निशमय। सन्देशं च श्रवणयुगले कर्णपूरीकुरु ।

**व्याख्या**—काश्मीरेष्विति । हे सखे ! काश्मीरेषु रम्याणि उद्यानानि येषां तैः, धनिकानां धनवतां, भवनैः गृहैः, स्वर्गस्य साम्यं सादृश्यं, वहन्ती धारयन्ती, या प्रवरपुरमिति राधजानी अस्ति । 'प्रधाननगरी राज्ञां राजधानीति कथ्यते ।' इति शब्दार्णवः । भूतलं भूषयन्त्याः अलङ्कुर्वत्याः, तस्याः मार्गं निशमय त्वं श्रृणु । 'शृणोत्याकर्णयति च तद्वन्निशमयत्यपि । निशाम्यतीति श्रवणे' इत्याख्यातचन्द्रिका । मम सन्देशं च श्रवणयुगले कर्णपूरीकुरु । 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इत्यभूततद्भावे च्विः । 'अस्य च्वौ' इतीत्वम् । एतेन मम सन्देशं अलङ्कारमिव कर्णयुगले धारयेति सूचितम् ।

**हिन्दी**—हे मित्र ! काश्मीर देश में मनोहर बगीचों से सुशोभित धनिकों के घरों से स्वर्ग की तुलना करने वाली प्रवरपुर की राजधानी है । भूलोक को अलंकृत करने वाली उस राजधानी में पहुँचने के मार्ग का मैं निर्देश कर रहा हूं, उसे सुनो और उसे अपने कानों का आभूषण बनाओ, अर्थात् मेरे द्वारा सुनाया हुआ सन्देश तुम्हें अत्यन्त कर्णप्रिय लगेगा ।

*English trans* : Oh friend ! In Kashmir there is its capital called Pravarpur. It has mansions of rich men with gardens. It is like heaven. It is an ornament of the earth. You listen it's way and adorn your ears with my message.

एष ख्यातो जगति मलयः क्ष्माधराणां वरेण्यो
जीमूतानां भुवि विहरतां विश्रमस्थानमाद्यम् ।
अस्योत्सङ्गे स्थितिमुपगतो व्योमयानस्थितानां
भ्रान्तिं चित्ते जनयसि मदस्राविणो वारणस्य ॥ ९ ॥

**अन्वयः**—जगति ख्यातः क्ष्माधराणां वरेण्यः एषः मलयः भुवि विहरतां जीमूतानाम् आद्यं विश्रमस्थानम् ( अस्ति ) । अस्य उत्सङ्गे स्थितिम् उपगतः त्वं व्योमयानस्थितानां चित्ते मदस्राविणः वारणस्य भ्रान्तिं जनयसि ।

**व्याख्या**—एष इति । जगति लोके, ख्यातः प्रसिद्धः, क्ष्माधराणां पर्वतानाम्, वरेण्यः मुख्यः, 'मुख्यवर्य्यवरेण्याश्च' इत्यमरः । एषः अग्रे दृश्यमानः, मलयः पर्वतविशेषः दक्षिणदिशि प्रसिद्धः, भुवि पृथिव्याम्, विहरतां विचरताम्, जीमूतानां मेघानाम्, आद्यं प्रथमम्, विश्रमस्य विश्रान्तेः स्थानमस्तीति शेषः, समुद्रादागताः अग्रे उत्तरस्यां दिशि सञ्चरिष्णवः मेघाः प्रथमं श्रमापनोदनाय अमुमेवाऽऽश्रयन्तीति भावः, अस्योत्सङ्गे शिखरे नितम्बे वा, स्थितिमुपगतः स्थितस्त्वं व्योमयाने विमाने, 'व्योमयानं विमानोऽस्त्री' इत्यमरः । स्थितानामाकाशचारिणाम्, चित्ते मनसि, मदस्राविणः प्रभिन्नस्य, वारणस्य गजस्य, भ्रान्तिं भ्रमम्, जनयसि कुरुषे, 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । जलपूर्णं त्वां विलोक्य गगनचारिणः मदक्लिन्नं गजं मन्येरन् ।

**हिन्दी**—संसार में प्रसिद्ध पर्वतश्रेष्ठ यह मलयाचल भूलोक में विचरण करने वाले मेघों का प्रथम विश्रामस्थान है, अर्थात् समुद्र से जल लेकर आये हुए मेघ सर्वप्रथम मलयाचल पर आकर ही विश्राम करते हैं, क्योंकि यह सभी पर्वतों में ऊँचा है । इसकी चोटी पर स्थित होकर तुम विमानों में बैठे हुए ( देवता आदि ) के मन में मद की वर्षा करने वाले गजराज का भ्रम उत्पन्न करोगे ।

*English trans* : This Malaya mountain is famous in the world and foremost among the mountains. This is the first resting place for the clouds when they are roaming on the earth. When you are resting on it's flank the persons in an aeroplane may confuse you with an elephant with rut.

मत्वा कश्चिद् वनगजमिह त्वां प्रमत्तो द्विपेन्द्रः
क्रोधाविष्टस्त्वयि वितनुयात् तीक्ष्णदन्तप्रहारम् ।
विद्युद्दीप्त्या मुहुरुपनयँस्तस्य दृष्टेर्विकारं
गर्जन्नुच्चैर्मृगरिपुरिव त्रासय द्रावयैनम् ॥ १० ॥

**अन्वयः**—इह कश्चित् प्रमत्तः द्विपेन्द्रः त्वां वनगजं मत्वा क्रोधाविष्टः त्वयि तीक्ष्णदन्तप्रहारं वितनुयात् । विद्युद्दीप्त्या तस्य दृष्टेः मुहुः विकारम् उपनयन् मृगरिपुः इव उच्चैः गर्जन् एनं त्रासय द्रावय ।

**व्याख्या**—मत्वेति । इह मलयपर्वते, कश्चित् प्रमत्तः मदोन्मत्तः, द्विपेन्द्रः गजेन्द्रः, त्वां वनगजं वन्यहस्तिनं, मत्वा विभाव्य, मलयस्य गजप्रभवत्वं प्रसिद्धम् । क्रोधेन आविष्टः आक्रान्तः सन्, त्वयि तीक्ष्णदन्तप्रहारं वितनुयात् कुर्यात्, त्वं विद्युतः दीप्त्या प्रकाशेन, तस्य दृष्टेः, मुहुः पुनः पुनः, विकारं उपनयन् जनयन्, प्रकाशपातेन नेत्राभिभवः प्रसिद्धः । मृगरिपुः सिंह इव, उच्चैः उच्चस्वरेण गर्जन्, एनं प्रतिपक्षिभूतं गजं, त्रासय भीषय, द्रावय पलायनपरं कुरु ।

**हिन्दी**—यहाँ ( मलयपर्वत पर ) यदि कोई मदमत्त हाथी तुमको जंगली गजराज समझकर क्रोध से तुम्हारे ऊपर अपने तेज दाँतों का प्रहार करे, तो तुम बिजली की चकाचौंध द्वारा उसकी दृष्टि को बार-बार विकृत करके और सिंह के समान जोर से दहाड़ कर उसे डराकर भगा देना ।

*English trans :* Here some haughty elephant may think that you are a wild elephant and being angry may attack you with his sharp tusks. If so, dazzle his eyes with a flash of lightening, roar like a lion, terrify him and drive him away.

सान्द्रं यस्मिन् स्फुरति विपिनं सर्वतश्चन्दनाना-
मालिङ्गन्ति क्रमुकविटपान् यत्र ताम्बूलवल्ल्यः ।
एलानां च प्रसरति गजैश्चूर्णितानां सुगन्धः
शैलः सोऽयं जलद ! मलयः कस्य न श्लाघनीयः ।। ११ ।।

**अन्वयः**—हे जलद ! यस्मिन् सर्वतः चन्दनानां सान्द्रं विपिनं स्फुरति । यत्र ताम्बूलवल्ल्यः क्रमुकविटपान् आलिङ्गन्ति । यत्र च गजैः चूर्णितानाम् एलानां सुगन्धः प्रसरति । सः अयं मलयः शैलः कस्य न श्लाघनीयः ( अस्ति )।

**व्याख्या**—सान्द्रमिति । हे जलद ! यस्मिन् मलयपर्वते, सर्वतः सर्वासु दिक्षु, 'आद्यादिभ्य उपसङ्ख्यानम्' इति सार्वविभक्तिकस्तसिः । चन्दनानां सान्द्रं निविडम्, विपिनं वनम्, स्फुरति शोभते । यत्र ताम्बूलानां वल्ल्यः नागवल्ल्यः, 'ताम्बूलवल्ली ताम्बूली नागवल्ली' इत्यमरः । क्रमुकविटपान् पूगवृक्षान् आलिङ्गन्ति । यत्र च गजैः हस्तिभिः, पादैश्चूर्णितानां क्षुण्णाना-मेलानां प्रसिद्धानां सुगन्धः परिमलः प्रसरति । सोऽयं मलयः शैलः कस्य श्लाघ-नीयः प्रियो, न भवेत् ? सर्वस्यैवाऽयं श्लाघ्यः इति भावः । समासोक्तिः, उदात्तश्च अनयोः संसृष्टिः ।

**हिन्दी**—जिस( मलयपर्वत )में चारों ओर चन्दन-वृक्षों का घना जंगल है, पानों की लताएँ सुपारी के वृक्षों को आलिंगन की हुई हैं और जहाँ हाथियों के पैरों से कुचली हुई इलायचियों की सुगन्ध चारों ओर फैली है, ऐसा यह मलय पर्वत अपने विशिष्ट गुणों के कारण किसको प्रिय नहीं है ? अर्थात् यह मलयपर्वत सर्वजनप्रिय होने के कारण सबका आश्रयणीय है ।

*English trans :* There is a thick forest of sandal trees on all the sides of this Malaya mountain. Here the betel creepers embress the betel-nut trees. The perfume of cardamoms crushed under the feet of elephants spreads every-where here. Who will not like this mountain ?

अत्युत्तुङ्गं मलयशिखरं सम्भ्रमादाश्रितस्य
प्राच्यामास्तां तव नयनयोर्गोचरश्चोलदेशः ।
धृत्वा यस्मिन् मधुरसलिलं सह्यपुत्र्याः फलेषु
व्योमस्थानां समुपददते स्वर्गिणां नारिकेलाः ॥ १२ ॥

**अन्वयः**—सम्भ्रमात् अत्युत्तुङ्गं मलयशिखरम् आश्रितस्य तव प्राच्यां चोलदेशः नयनयोः गोचरः आस्ताम् । यस्मिन् नारिकेलाः फलेषु सह्यपुत्र्याः मधुरसलिलं धृत्वा व्योमस्थानां स्वर्गिणां समुपददते ।

**व्याख्या**—अत्युत्तुङ्गमिति । सम्भ्रमात् त्वरया, अत्युत्तुङ्गमत्युन्नतम्, मलयस्य शिखरं शृङ्गम्, आश्रितस्य तव, प्राच्यां पूर्वस्यां दिशि, चोलदेशः कावेरी-जलप्लावितमिदानीन्तनव्यवस्थया मद्रासप्रदेशा( तामिलनाडा )न्तर्गतं तञ्जौर-मण्डलम्, नयनयोः गोचरः विषयः, आस्तां भवतु । यस्मिन् नारिकेलवृक्षाः फलेषु सह्यपुत्र्याः कावेर्य्याः, मधुरं सलिलं जलं धृत्वा, व्योमस्थानामाकाश-चारिणां, स्वर्गिणां देवानाम्, समुपददते उपायनीकुर्वन्ति । अमृतेन कावेर्य्याः जलं तुलयितुं तेभ्यः उपहरन्ति । उत्प्रेक्षालङ्कारः ।

**हिन्दी**—बड़ी शीघ्रता से मलयपर्वत की चोटी पर चढ़े हुए तुम्हें पूर्व दिशा में चोलदेश दिखलायी देगा, जहाँ नारियल के वृक्ष अपने फलों में कावेरी नदी के मधुर जल को भरकर मानों आकाश में स्थित देवताओं को उसका उपहार दे रहे हैं ।

*English trans* : Having ascended hastily the highest peak of the Malaya mountain you will have a view of the Chola-country to the east. Here the coconut trees collect the sweet water of the Kaveri river in their fruits and offer it to the gods in the heaven.

पात्रीभावं नय नयनयोरन्यतः पाण्डचदेशं
यस्मिन्नब्धिः कलयति समं सङ्गमं ताम्रपर्ण्या ।
जातं यस्मात् कनकरुचिरं मौक्तिकं शुक्तिकायां
स्थानं गात्रे भजति नियतं राजसीमन्तिनीनाम् ॥ १३ ॥

**अन्वयः**—अन्यतः पाण्डचदेशं नयनयोः पात्रीभावं नय । यस्मिन् अब्धिः ताम्रपर्ण्या समं सङ्गमं कलयति । यस्मात् शुक्तिकायां जातं कनकरुचिरं मौक्तिकं राजसीमन्तिनीनां गात्रे नियतं स्थानं भजति ।

**व्याख्या**—पात्रीभावमिति । अन्यतः अन्यस्यां दक्षिणस्यां दिशि, पाण्डच-देशं इदानीन्तनव्यवस्थया मद्रास( तामिलनाड )प्रान्तान्तर्गतं तिनिवेल्लिमण्डलं मदुरामण्डलं च, नयनयोः पात्रीभावं नय, पश्येत्यर्थः । यस्मिन् अब्धिः सागरः, ताम्रपर्ण्या तदाख्यनद्या, सङ्गमं कलयति सङ्गच्छते । यस्मात् सागरात्, शुक्ति-कायां जातमुत्पन्नं, कनकमिव सुवर्णमिव, रुचिरं सुन्दरं पीतवर्णं, मौक्तिकं प्रशस्तम्, राजसीमन्तिनीनां राजाङ्गनानाम्, 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः । गात्रे शरीरे, नियतं नियमेन, स्थानं भजति प्राप्नोति । तत्रत्यानां मुक्ताफलानामलङ्कारान् राजाङ्गनाः प्रीत्या धारयन्तीति भावः ।

**हिन्दी**—दूसरी ओर तुम दक्षिण दिशा में स्थित पाण्डचदेश का दर्शन करोगे, जहाँ समुद्र ताम्रपर्णी नदी के साथ मिल रहा है । अर्थात् यहाँ समुद्र का ताम्रपर्णी नदी के साथ संगम ( मिलन ) हुआ है । जिस समुद्र से शुक्ति के भीतर से निकले हुए सोने के सदृश सुन्दर वर्ण वाले मोती राजाओं की रमणियों के अंग-अंग पर आभूषण के रूप में स्थान प्राप्त करते हैं ।

*English trans* : On the other side you will have a glance of the Pandya-province. Here the Tamraparni river joins the ocean. The pearls having a bright golden colour produced here in the shells, definitely obtain a place on the limbs of the ladies of the royal families.

देशस्तालीवनवलयितः केरलाख्यः प्रतीच्यां
पादप्रान्ते लुठति जलधिर्यत्र सह्याचलस्य ।
मन्दस्पन्दो हरति मुरलामारुतः केरलीनां
यत्र ग्लानिं सुरतजनितां केतकीगन्धबन्धुः ॥ १४ ॥

**अन्वयः**—प्रतीच्यां तालीवनवलयितः केरलाख्यः देशः अस्ति । यत्र जलधिः सह्याचलस्य पादप्रान्ते लुठति । यत्र मन्दस्पन्दः केतकीगन्धबन्धुः मुरलामारुतः केरलीनां सुरतजनितां ग्लानिं हरति ।

**व्याख्या**—देश इति । प्रतीच्यां पश्चिमायां दिशि, तालीनां वनैः वलयितः वेष्टितः, 'वेष्टितं स्याद्वलयितम्' इत्यमरः । केरलाख्यः देशः, अस्तीति शेषः । यत्र जलधिः समुद्रः, सह्याचलस्य सह्यपर्वतस्य, पादप्रान्ते 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । पादानां प्रान्ते, लुठति 'लुठ् संश्लेषणे' । यत्र मन्दः स्पन्दः किञ्चिच्चलनं यस्य सः, केतकीनां गन्धस्य बन्धुः सुहृद्, केतकीगन्धयुक्त इत्यर्थः । मुरला नाम केरलदेशे प्रसिद्धा नदी, तस्याः मारुतः वातः, एतेन तस्य शैत्ययुक्तत्वं सूच्यते । केरलीनां केरलदेशस्त्रीणाम्, सुरतेन रतिक्रीडया, जनितां ग्लानिं श्रमं, हरति अपनयति ।

**हिन्दी**—पश्चिम दिशा में ताड़ के वनों से घिरा हुआ केरल देश है, जहाँ सह्यपर्वत के चरणों पर समुद्र लुढ़क रहा है और जहाँ मन्दगति से बहने वाला, केतकी के फूलों की सुगन्धि से युक्त मुरला नदी के स्पर्श से शीतल किया हुआ पवन केरल देश में निवास करने वाली स्त्रियों के रति-क्रीडाजनित थकावट को दूर करता है ।

*English trans* : You will see the Keral country surrounded by palm-trees to the west. Here the ocean rolls on the feet of the Sahya-mountain. The breeze of Murala river carrying the perfume of the ketak-flowers removes the exhaustion of the keral-ladies caused by union.

शैलादस्मात् पथि दिविषदामुत्पतन्तं भवन्तं
सम्पश्यन्तो दिशि धनपतेर्वायुना नीयमानम् ।
उत्थाय द्राग् जलधिजठरान्निर्भयं वृत्रशत्रो-
र्मैनाकाद्रिं पितृगृहमभिप्रस्थितं कल्पयेयुः ।। १५ ।।

**अन्वयः**—अस्मात् शैलात् दिविषदां पथि उत्पतन्तं, धनपतेः दिशि वायुना नीयमानं भवन्तं सम्पश्यन्तः वृत्रशत्रोः निर्भयं द्राक् जलधिजठरात् उत्थाय पितृ-गृहम् अभि प्रस्थितं मैनाकाद्रिं कल्पयेयुः ।

**व्याख्या**—शैलादिति । अस्मात् शैलात् मलयपर्वतात्, दिविषदां देवानाम्, पथि मार्गे, आकाशे इत्यर्थः । उत्पतन्तं धनपतेः कुबेरस्य, दिशि उत्तरस्यां दिशि, वायुना वातेन नीयमानम्, भवन्तं त्वां, सम्पश्यन्तः विलोकयन्तो जनाः, वृत्रशत्रोः इन्द्रात्, निर्भयं भयरहितं सन्तम्, मैनाकाद्रिः पक्षच्छेदोद्यतात् इन्द्रात् भीतः सागरे निममज्जेति पुराणेषु प्रसिद्धम् । जलधेः समुद्रस्य, जठरादुदरात्, द्राग् झटिति, 'स्राग्झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः । उत्थाय निर्गत्य, पितुर्हिमाचलस्य, गृहमभि गेहं प्रति, प्रस्थितं मैनाकाद्रिं कल्पयेयुः मन्येरन् । भ्रान्तिमान् अलङ्कारः ।

**हिन्दी**—इस मलयपर्वत से देवताओं के मार्ग ( आकाश ) की ओर उड़ने वाले कुबेर की दिशा ( उत्तर ) में वायु द्वारा ले जाये जाने वाले तुमको देख-कर लोग इन्द्र के भय को छोड़कर समुद्र के भीतरी मार्ग से उठकर अपने पिता ( हिमालय ) की ओर जाने वाले मैनाक पर्वत का भ्रम करेंगे ।

*English trans* : When you will leave this mountain and fly in the sky the wind will carry you to the north. The persons who see you thus may think that the Mainak mountain fear-less of Indra is going to the house of his father Himalaya.

ज्ञात्वाऽम्भोद ! त्वदभिगमनं कूजितैश्चातकानां
हित्वा क्रीडासरसि वसतिं मानसं गन्तुकामाः ।
सञ्चिन्वन्तः पथि समुचितं शम्बलं राजहंसा
यात्राकाले तव नरपतेरग्रदूता यथा स्युः ॥ १६ ॥

**अन्वयः**—हे अम्भोद ! चातकानां कूजितैः त्वदभिगमनं ज्ञात्वा, क्रीडासरसि वसतिं हित्वा, मानसं गन्तुकामाः पथि समुचितं शम्बलं सञ्चिन्वन्तः राजहंसाः नरपतेः यथा तव अग्रदूताः स्युः ।

**व्याख्या**—ज्ञात्वेति । हे अम्भोद ! मेघ ! चातकानां कूजितैः कलरवैः, तव आगमनं ज्ञात्वा विज्ञाय, क्रीडासरसि क्रीडार्थं निर्मितेषु सरःसु, वसतिं निवासम्, हित्वा परित्यज्य, मानसं तदाख्यं सरः, गन्तुकामाः, पथि मार्गे, समुचितं योग्यं, शम्बलं पाथेयम्, सञ्चिन्वन्तः गृह्णन्तः, राजहंसाः तव नरपतेः राज्ञः, यथा इव, अग्रदूताः अग्रे गच्छन्तः दूताः स्युः । राज्ञां यात्राकाले तदागमनं सूचयन्तः दूताः अग्रे गच्छन्तीति प्रसिद्धम् । कालान्तरे मानसस्य हिमदुष्टत्वात् हिमस्य च हंसानां रोगहेतुत्वात् अन्यत्र गताः हंसाः पुनः वर्षासु मानसमेव गच्छन्तीति प्रसिद्धिः ।

**हिन्दी**—हे मेघ ! चातक-पक्षियों के कलरव से तुम्हारे आगमन की सूचना को प्राप्त कर अपने क्रीड़ा-सरोवर को छोड़कर मानसरोवर को जाने की इच्छा करने वाले, रास्ते के लिए उचित चबैना का संग्रह करने वाले राजहंस तुम्हारे लिए राजा के आगे-आगे चलने वाले राजदूत जैसे लगेंगे ।

*English trans* : Oh cloud ! The swans will know your arrival by the cooing of the chatak-birds. Then they will abandon the beautiful lakes and proceed to the Manas lake. On their way they will collect suitable provision for the journey and will be like your harbingers.

क्षेत्रं सर्वं तपसि कृषिका लाङ्गलैः कर्षयित्वा
वृक्षच्छायां सह परिजनैर्विश्रमायाऽऽश्रयन्तः ।
ऊर्ध्वग्रीवा दिशि दिशि घन ! प्रेक्षमाणा भवन्तं
ग्राम्यैर्गीतैर्मुदितमनसः स्वागतं भावयेयुः ॥ १७ ॥

**अन्वयः**—हे घन ! तपसि सर्वं क्षेत्रं लाङ्गलैः कर्षयित्वा, परिजनैः सह विश्रमाय वृक्षच्छायाम् आश्रयन्तः ऊर्ध्वग्रीवाः दिशि दिशि भवन्तं प्रेक्षमाणाः मुदितमनसः कृषिकाः ग्राम्यैः गीतैः स्वागतं ( अर्थात् भवतः ) भावयेयुः ।

**व्याख्या**—क्षेत्रमिति । हे घन ! तपसि निदाघे, 'निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः' इत्यमरः । कृषिकाः कृषीवलाः, 'क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः' इत्यमरः । सर्वं क्षेत्रं केदारं लाङ्गलैः कर्षयित्वा विलिख्य, परिजनैः सेवकैः सह, विश्रमाय श्रमापनोदाय, वृक्षच्छायामाश्रयन्तः, ऊर्ध्वग्रीवाः ग्रीवा-मुन्नमय्य, दिशि दिशि सर्वासु दिक्षु, भवन्तं प्रेक्षमाणाः, मुदितमनसः भवन्त-मालोक्य प्रसन्नाः, ग्राम्यैः ग्रामवासिजनोचितैः, 'ग्रामाद्यखञौ' इति सूत्रेण ग्रामशब्दात् यप्रत्ययः । गीतैः भवतस्तव स्वागतं भावयेयुः कुर्युः ।

**हिन्दी**—हे मेघ ! ग्रीष्मकाल में सभी खेतों को हल से जोतकर अपने सेवकों के साथ विश्राम करने के लिए वृक्ष की छाया का आश्रय लेते हुए गर्दन को ऊपर की ओर उठाकर चारों दिशाओं में तुम्हारी प्रतीक्षा करने वाले किसान लोग देहाती गीतों को गाते हुए ( उन गीतों से ) तुम्हारा स्वागत करेंगे ।

*English trans* **:** Oh cloud ! The farmers having ploughed their fields in summer will be resting in the shade of a tree with their servants. They will be looking for you with uplifted necks in all the directions. They will be delighted to see you and welcome you with rural songs.

ग्रीष्मे भीष्मे तपनकिरणैस्तापिता सर्वकालं
धारासारैस्तव वसुमती प्रापिता शीतलत्वम् ।
त्वत्संसर्गात् पुलकवलयं कन्दलैर्व्यञ्जयन्ती
गन्धोद्गारैर्मुहुरुपनतैः सूचयेदात्मतोषम् ॥ १८ ॥

**अन्वयः**—भीष्मे ग्रीष्मे तपनकिरणैः सर्वकालं तापिता, तव धारासारैः शीतलत्वं प्रापिता, त्वत्संसर्गात् कन्दलैः पुलकवलयं व्यञ्जयन्ती वसुमती मुहुः उपनतैः गन्धोद्गारैः आत्मतोषं सूचयेत् ।

**व्याख्या**—ग्रीष्म इति । भीष्मे भीषणे, 'दारुणं भीषणं भीष्मम्' इत्यमरः । ग्रीष्मे ग्रीष्मऋतौ, तपनस्य सूर्यस्य, 'तपनः सविता रविः' इत्यमरः । किरणैः मयूखैः, सर्वकालं तापिता, तव धाराणामासारैः अविरलपातैः, शीतलत्वं प्रापिता, तव संसर्गात् सम्पर्कात्, कन्दलैः अङ्कुरैः, पुलकानां रोमाञ्चानाम्, वलयं निचयम्, व्यञ्जयन्ती प्रकटयन्ती, वसुमती पृथ्वी, मुहुः पुनः पुनः, उपनतैः प्रकाशितैः, गन्धस्य उद्गारैः, आत्मनः स्वस्याः, तोषं प्रमोदम्, सूचयेत् । अत्र मेघस्य नायकत्वं पृथिव्याः नायिकात्वं च व्यज्यते ।

**हिन्दी**—डरावनी ग्रीष्मऋतु में सूर्य की किरणों से तपी हुयी और तुम्हारे द्वारा की गयी जलवृष्टि से शीतलता को प्राप्त करने वाली, तुम्हारे सम्पर्क से नवीन अंकुरों के रूप से अपने रोमाञ्च को प्रकट करने वाली पृथ्वी ( नायिका ) बार-बार निकलने वाली गन्ध द्वारा अपना सन्तोष सूचित करेगी ।

*English trans* : The earth was tormented by the severe heat of summer for a long time. Now it is cooled down by your heavy showers. With the new sprouts it will express it's thrill caused by your union and issuing a sweet smell frequently it will reveal it's joy.

सन्दृश्यन्ते ललितमृदुलाः शाद्वलेष्विन्द्रगोपा
वर्षारम्भं कथयितुमिव प्रेषिता वासवेन।
आमोदाढ्यान् कुसुमनिकरैः कम्पयन्तः कदम्बान्
वाताश्चेतांस्यपि विरहिणां मन्दमन्दं वहन्ति ॥ १९ ॥

**अन्वयः**—शाद्वलेषु वर्षारम्भं कथयितुम् इव वासवेन प्रेषिताः ललितमृदुलाः इन्द्रगोपाः सन्दृश्यन्ते । कुसुमनिकरैः आमोदाढ्यान् कदम्बान्, विरहिणां चेतांसि अपि कम्पयन्तः वाताः मन्दमन्दं वहन्ति ।

**व्याख्या**—सन्दृश्यन्त इति । शाद्वलेषु शादहरितेषु हरिततृणमयभूमिषु इत्यर्थः । 'शाद्वलः शादहरिते' इत्यमरः । वर्षारम्भं वर्षाकालस्य प्रारम्भम्, कथयितुं सूचयितुम्, वासवेन महेन्द्रेण, प्रेषिताः, ललिताः मनोज्ञाः, मृदुलाः कोमलाः, 'कोमलं मृदुलं मृदु' इत्यमरः । इन्द्रगोपाः रक्तवर्णाः कीटविशेषाः, सन्दृश्यन्ते विलोक्यन्ते । कुसुमानां पुष्पाणाम्, निकरैः निचयैः, आमोदेन सुगन्धेन, आढ्यान् पूर्णान्, कदम्बान् कदम्बवृक्षान्, वर्षाकाले धाराकदम्बाः पुष्प्यन्ति । विरहिणां विरहिजनानाम्, चेतांसि मनांसि, अपि चार्थे, कम्पयन्तः वाताः वायवः, मन्दमन्दं वहन्ति वान्ति ।

**हिन्दी**—वर्षाऋतु के प्रारम्भ को सूचित करने के लिए देवराज इन्द्र द्वारा भेजे गये सुन्दर तथा सुकोमल शरीर के इन्द्रगोप ( वीरबहूटियाँ ) हरियाली पर दृष्टिगोचर होने लगे हैं । फूलों के गुच्छों से भरे हुए कदम्ब-वृक्षों तथा विरहीजनों के मनों को कम्पित करने वाली वर्षाकालीन वायु धीरे-धीरे बहने लगी है ।

*English trans* : The lovely and delicate Indragopas ( red insects ) are visible on the green ground. They appear to have been sent by Indra to indicate the begining of tha rainy season. The winds are blowing gently. They shake the kadamb trees, fragrant with flowers and make the minds of the separated lovers tremble.

नद्यः सद्यः सलिलबहुलाः प्राप्तरूपाश्च कूपाः
सस्यश्यामा धरणिरखिला मुक्तरन्ध्राः शिलीन्ध्राः ।
पुष्पोद्भेदैः कुटजतरवो वासयन्तो वनान्तान्
निःसन्देहं भवदुपकृतिं निष्पदं व्याहरेयुः ॥ २० ॥

**अन्वयः**—सद्यः सलिलबहुलाः नद्यः, प्राप्तरूपाः कूपाः, सस्यश्यामा अखिला धरणिः मुक्तरन्ध्राः शिलीन्ध्राः, पुष्पोद्भेदैः वनान्तान् वासयन्तः कुटजतरवः च भवदुपकृतिं निःसन्देहं निष्पदं व्याहरेयुः ।

**व्याख्या**—नद्य इति । नद्यः सरितः, सद्यः तत्कालम्, 'सद्यः सपदि तत्क्षणे' इत्यमरः । सलिलेन जलेन । बहुलाः पूर्णाः, कूपाः प्राप्तं रूपं यैस्ते, ग्रीष्मे रिक्ताः कूपाः वर्षाकाले जलपूर्णा भवन्ति । अखिला सकला, धरणिः पृथिवी, सस्येन श्यामा श्यामवर्णा, शिलीन्ध्राः कन्दलयः, 'कन्दल्यां च शिलीन्ध्रः स्यात्' इति शब्दार्णवः । मुक्तं रन्ध्रं छिद्रं यैस्ते नीरन्ध्राः, निबिडा इत्यर्थः । पुष्पाणां कुसुमानाम्, उद्भेदैः विकासैः, वनान्तान् वासयन्तः सुगन्ध-युक्तान् कुर्वन्तः, कुटजतरवः कुटजवृक्षाः, 'कुटजो गिरिमल्लिका' इति हलायुधः । भवतः तव, उपकृतिमुपकारम्, निःसन्देहं निःसंशयम्, निष्पदं पदं शब्दं विना, दर्शनमात्रेण व्याहरेयुः प्रकटयेयुः ।

**हिन्दी**—तुम्हारे आगमन पर तत्काल जल से भर जाने वाली क्षुद्र नदियाँ, पर्याप्त पानी से भर जाने के कारण अच्छे दिखलायी देने वाले कुँए, फसलों से हरी-भरी अपार भूमि, घनी कन्दलियाँ कलियों के विकसित हो जाने से वनों को सुवासित करने वाले कुटज वृक्ष निःसंशय तुम्हारे उपकार को चुपचाप प्रकट करने लगेंगे ।

*English trans* : The overflowing rivers, the wells full-of water, the whole earth green with harvest, the thick mushrooms and the kutaj trees spreading the perfume of their flowers in the forests will no doubt express their gratitude towards your obligations without words.

क्रान्त्वा किञ्चिद् गगनपदवीं सम्प्रयास्यन्नुदीचीं
पान्थान् गन्तुं गृहमुपदिशँस्तर्जयन् गर्जनेन।
उत्कल्लोलां प्रशमितमलां दर्शनस्पर्शनेन
भ्रातर्द्रक्ष्यस्यमलसलिलां तुङ्गभद्रां पुरस्तात् ॥ २१ ॥

**अन्वयः**—हे भ्रातः ! गगनपदवीं किञ्चित् क्रान्त्वा उदीचीं सम्प्रयास्यन्, गर्जनेन तर्जयन्, पान्थान् गृहं गन्तुम् उपदिशन् ( त्वं ) उत्कल्लोलां दर्शनस्पर्शनेन प्रशमितमलाम् अमलसलिलां तुङ्गभद्रां पुरस्तात् द्रक्ष्यसि।

**व्याख्या**—क्रान्त्वेति। हे भ्रातः ! बन्धो ! गगनमेव पदवीं मार्गम्, किञ्चित् क्रान्त्वा आक्रम्य, उदीचीमुत्तरां दिशम्, सम्प्रयास्यन् गमिष्यन्, गर्जनेन स्तनितेन, तर्जयन् भर्त्सयन्, पान्थान् पथिकान्, गृहं गन्तुमुपदिशन्, 'भवन्तः शीघ्रं गृहं गच्छन्तु' इत्यादिशन्, उत्कल्लोलाम्—उद्गताः कल्लोलाः तरङ्गाः यस्यास्ताम्, 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु। महत्सूल्लोलकल्लोलौ' इत्यमरः। दर्शनेन स्पर्शनेन वा, प्रशमितः मलः यया ताम्, अमलं निर्मलं सलिलं जलं यस्यास्ताम्, तुङ्गभद्रां दक्षिणदेशे प्रसिद्धां नदीम्, 'इमां दक्षिणापथजाह्नवीम्' वदन्ति। पुरस्तात् अग्रे, द्रक्ष्यसि प्रेक्षिष्यसे।

**हिन्दी**—हे बन्धु ! आकाश-मार्ग पर कुछ आक्रमण करके उत्तर दिशा की ओर प्रस्थान करते हुए अपनी गर्जना से पथिकजनों को डरा-धमकाकर घर जाने का उपदेश देते हुए तुम आगे चलकर, जिसमें बड़ी-बड़ी लहरें उठ रही हैं तथा जो अपने दर्शन-स्पर्शन से पापों का नाश कर देती है, ऐसी स्वच्छ जल से पूर्ण तुंगभद्रा नदी का दर्शन करोगे।

*English trans* : Oh brother, having covered the aerial path a little, you will procced to the north, advising the travellers to go home, threatening them with thunders. On your way you will see the river Tungabhadra ahead, flowing with high surges. It's water is pure and spotless and it removes the sin by mere sight or touch.

तां सम्प्रेक्ष्य द्रुतमवतरन्नन्तरिक्षात् क्षमायां
प्रह्वीभूतो व्रज जलमुचामग्रणीस्तत्समीपम् ।
पातुं तस्या जलमनुपमं सम्प्रवृत्तं भवन्तं
भ्रष्टं यूथाद् द्विरदकलभं तर्कयिष्यन्ति सिद्धाः ॥ २२ ॥

**अन्वयः**—हे जलमुचामग्रणीः ! तां सम्प्रेक्ष्य अन्तरिक्षात् क्षमायां द्रुतम् अवतरन् प्रह्वीभूतः तत्समीपं व्रज । तस्याः अनुपमं जलं पातुं सम्प्रवृत्तं भवन्तं सिद्धाः यूथात् भ्रष्टं द्विरदकलभं तर्कयिष्यन्ति ।

**व्याख्या**—तामिति । हे जलमुचां मेघानामग्रणीः मुख्य ! तां सम्प्रेक्ष्य दृष्ट्वा अन्तरिक्षात् आकाशात्, द्रुतं शीघ्रम्, क्षमायां पृथिव्याम्, अवतरन्, प्रह्वीभूतः नम्रः, तस्याः तुङ्गभद्रायाः, समीपं निकटं, व्रज गच्छ । तस्याः अनुपममुपमारहितं जलं पातुं सम्प्रवृत्तं भवन्तं त्वाम्, 'कृष्णास्नानं तुङ्गापानमिति प्रसिद्धिः' । सिद्धाः व्योमस्थाः देवयोनिविशेषाः, 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः । यूथात् समूहात्, 'सजातीयैः कुलं यूथम्' इत्यमरः । भ्रष्टं निर्गतम्, द्विरदस्य गजस्य, कलभं शावकम्, 'कलभः करिशावकः' इत्यमरः । तर्कयिष्यन्ति दूरात् दृश्यमानं त्वां गजकलभं मंस्यन्ते ।

**हिन्दी**—हे मेघों में श्रेष्ठ ! उस( नदी )को देखकर आकाश से शीघ्रता से भूमि पर उतरते हुए बड़ी नम्रता से तुम तुङ्गभद्रा नदी के पास जाना, उसके अनुपम ( महिमायुक्त ) जल को पीने के लिए तुम्हें तैयार देखकर आकाश में स्थित सिद्धगण ( तुम्हें ) झुंड से बिछुड़ा हुआ हाथी का बच्चा समझेंगे ।

*English trans :* Oh foremost among the clouds, having seen the river Tungabhadra you descend from the sky on the earth and humbly approach it. While you are engaged in drinking the incomparable water of that river the siddhas will confuse you with a young elephant separated from the herd.

किष्किन्धाख्या भवति नगरी वामतो नाऽतिदूरे
सुग्रीवाख्यो रघुपतिसुहृद् यां कपीन्द्रः शशास ।
स्थानं पम्पासर इति गिरिर्माल्यवन्नामधेय-
स्तस्याः पार्श्वे जनयतु सुखं चक्षुषोरक्षयं ते ।। २३ ।।

**अन्वयः**—किष्किन्धाख्या नगरी वामतो नाऽतिदूरे भवति । रघुपतिसुहृद् सुग्रीवाख्यः कपीन्द्रः यां शशास । तस्याः पार्श्वे पम्पासर इति स्थानं माल्यवन्नामधेयः गिरिः ( च ) ते चक्षुषोः अक्षयं सुखं जनयतु ।

**व्याख्या**—किष्किन्धेति । तस्याः तुङ्गभद्रायाः, वामतो वामभागे, नातिदूरे समीपे, किष्किन्धाख्या नगरी भवति । यां पूर्वं रघुपतेः रामचन्द्रस्य, सुहृत् सखा, सुग्रीवनामा कपीन्द्रः वानराधिपतिः, शशास पालयामास । तस्याः किष्किन्धायाः पार्श्वे, पम्पासर इति स्थानं माल्यवन्नामा गिरिः पर्वतश्च, ते तव, चक्षुषोः नेत्रयोः, अक्षयं प्रचुरम्, सुखं जनयतु करोतु ।

**हिन्दी**—वहाँ से बायीं ओर जाने पर पास में ही किष्किन्धा नगरी है । श्रीरामचन्द्र का प्रियमित्र वानराधिपति सुग्रीव उस पर शासन करता था, उसी के समीप पम्पा नाम का सरोवर है और माल्यवान् नामक पर्वत है, ये दोनों ही तुम्हारी आँखों को अतिशय सुख प्रदान करेंगे । अर्थात् जब तुम उस दिशा में जाओगे तो प्राकृतिक सौन्दर्य युक्त इन दोनों का अवश्य दर्शन कर लेना ।

*English trans* : The city called Kishkindha is to the left and not far off. Sugriva the king of monkeys and a friend of Bhagawan Ramchandra formerly rulled it. The Pampa lake and the Malyawan mountain are in the vicinity of that city. You will be very much delighted to behold them.

तस्मिन् पूर्वं न्यवसदचले सानुजो रामचन्द्रः
सख्यं सीताविरहविधुरो वानरेन्द्रेण यातः ।
दृष्ट्वाऽऽसन्ने वनपरिसरे हैमनीं यः समृद्धिं
प्राप्नोत् कष्टामहमिव दशां विप्रयोगप्रयुक्ताम् ॥ २४ ॥

**अन्वयः**—सीताविरहविधुरः वानरेन्द्रेण सख्यं यातः सानुजो रामचन्द्रः तस्मिन् अचले पूर्वं न्यवसत् । यः आसन्ने वनपरिसरे हैमनीं समृद्धिं दृष्ट्वा अहम् इव विप्रयोगप्रयुक्तां कष्टां दशां प्राप्नोत् ।

**व्याख्या**—तस्मिन्निति । सीतायाः विरहेण वियोगेन, विधुरः दुःखितः, वानराणामिन्द्रेण राज्ञा सुग्रीवेण, सख्यं मैत्रीम्, यातः प्राप्तः, अनुजेन लक्ष्मणेन, सहितः युक्तः, तस्मिन् अचले पर्वते माल्यवति, पूर्वं न्यवसन् निवासं चकार । यः आसन्ने सन्निकृष्टे, वनपरिसरे विपिनप्रदेशे, हैमनीं हेमन्तसम्बन्धिनीम्, 'सर्वत्राण् च तलोपश्च' इति सूत्रेण हेमन्तशब्दादण्प्रत्ययस्तलोपश्च । 'टिड्ढाणञि'ति ङीप् । समृद्धिं पुष्पसम्पत्तिम्, दृष्ट्वा विलोक्य, अहमिव विप्रयोगेन वियोगेन, प्रयुक्तां कृताम्, कष्टां शोचनीयाम्, दशामवस्थाम्, प्राप्नोत् प्राप्तवान् । तथा चाभियुक्तोक्तिः—'सीताविरहसन्तप्तं रामं मुहुरमूमुहत् । मदमत्तमयूरस्य पृष्ठे माल्यवतो गिरेः ॥' इति स्मरणालङ्कारः ।

**हिन्दी**—सीता के विरह से दुःखित तथा वानराधिपति सुग्रीव के साथ मित्रता करने वाले श्रीरामचन्द्र ने अपने छोटे भाई लक्ष्मण के साथ उसी पर्वत पर निवास किया था और उन्होंने समीप के वन में हेमन्त ऋतु सम्बन्धी पुष्प आदि की समृद्धि को देखकर मेरी भाँति पत्नी-विरहजनित कठिन मानसिक स्थिति का अनुभव किया था ।

*English trans* : In former days, Ramchandra when he was separated from Seeta made friendship with Sugriva the king of monkeys and lived on that mountain. When he saw the abundance of flowers in the winter season, he was much afflicted by the grief caused by the separation as I am now.

तामुल्लङ्घ्य क्षपितकलुषां तुङ्गभद्रां स्रवन्ती-
माकाशस्थः पुनरपि भवानग्रतो ढौकमानः।
कुल्याम्भोभिर्भृशमुपचितान् सस्यसम्पत्समृद्धान्
रम्यान् कार्यप्रसितकृषकान् द्रक्ष्यसि क्षेत्रदेशान् ॥ २५ ॥

**अन्वयः**—क्षपितकलुषां तां तुङ्गभद्रां स्रवन्तीम् उल्लङ्घ्य आकाशस्थः पुनरपि अग्रतः ढौकमानः भवान् कुल्याम्भोभिः भृशम् उपचितान्, सस्य-सम्पत्समृद्धान् कार्यप्रसितकृषकान् रम्यान् क्षेत्रदेशान् द्रक्ष्यति ।

**व्याख्या**—तामिति । क्षपितं नाशितं कलुषं पातकं यया ताम्, तां प्रसिद्धाम्, तुङ्गभद्रां स्रवन्तीम् नदीम्, 'स्रवन्ती निम्नगाऽपगा' इत्यमरः । आकाशस्थः सन्, पुनरपि अग्रतः अग्रे, 'आद्यादिभ्य उपसङ्ख्यानम्' इति सार्वविभक्तिकस्तसिः । ढौकमानः गच्छन्, 'ढौकृ गतौ' । कुल्यानां कृत्रिमसरिताम्, 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । अम्भोभिः जलैः, भृशमत्यन्तम्, उपचितान् वृद्धिं प्राप्तान्, सस्यानां सम्पदा लक्ष्म्या, समृद्धान् सम्पन्नान्, कार्ये प्रसिताः तत्पराः कृषकाः कृषीवलाः येषां तान्, 'तत्परे प्रसितासक्तौ' इत्यमरः । 'कृषेर्वृद्धिश्चोदीचाम्' इत्युणादिसूत्रेण कृषधातोः क्वुन्प्रत्यये कृषकशब्दः, रम्यान् रमणीयान्, क्षेत्र-देशान् केदारप्रदेशान्, वनवासमण्डलस्थान्, द्रक्ष्यसि अवलोकयिष्यसि ।

**हिन्दी**—पाप-समूह का नाश करने वाली उस तुंगभद्रा नदी को पार करके आकाशमार्ग से पुनः आगे जाने के लिए तत्पर तुम नहरों के जल से जिन ( कृषकों ) का सभी प्रकार से हित हुआ है, जो फसलों की सम्पत्ति से पूर्ण रूप से समृद्ध हैं और जहाँ किसान लोग अपने-अपने कामों में लगे हुए हैं, ऐसे वहाँ के मनोहर आस-पास के शस्य-श्यामल खेतों से समृद्ध प्रदेशों को देखोगे ।

*English trans* : Having crossed the holy Tungabhadra river you again ascend the sky and proceed further. You will have the view of the beautiful farms of Vanavas region prosperous by irrigation and rich with harvest. You will see the farmers busy in their work.

त्वामायान्तं कृषिकवनिताः कार्यमग्नाः समीपं
प्रेक्षिष्यन्ते वदनकमलं कौतुकादुन्नमय्य ।
वक्त्रे तासां श्रमजलकणा बिन्दुभिस्त्वज्जलानां
कृत्वा सख्यं श्रियमनुपमां नेत्रपेयां विदध्युः ॥ २६ ॥

**अन्वयः**—कार्यमग्नाः कृषिकवनिताः कुतुकात् वदनकमलम् उन्नमय्य समीपम् आयान्तं त्वां प्रेक्षिष्यन्ते। तासां वक्त्रे श्रमजलकणाः त्वज्जलानां बिन्दुभिः सख्यं कृत्वा अनुपमां नेत्रपेयां श्रियं विदध्युः ।

**व्याख्या**—त्वामिति । कार्ये मग्नाः तत्पराः, कृषिकाणां कृषीवलानाम्, वनिताः स्त्रियः, कौतुकात् कुतूहलेन, वदनकमलं मुखम्, उन्नमय्य ऊर्ध्वं कृत्वा, समीपं निकटम्, आयान्तमागच्छन्तम्, त्वां प्रेक्षिष्यन्ते द्रक्ष्यन्ति । तासां वक्त्रे मुखे, श्रमजलस्य घर्मस्य, कणाः बिन्दवः, तव मेघस्य जलानाम्, मेघाज्जल-बिन्दुनिष्यन्दो युज्यते। सख्यं मैत्रीम्, कृत्वा विधाय, नेत्राभ्यां पेयां पातुं योग्याम्, दर्शनीयामित्यर्थः । अनुपमाम् असाधारणीम्, श्रियं शोभाम्, विदध्युः कुर्युः ।

**हिन्दी**—उस प्रदेश में अपने-अपने कामों में लगी हुयी किसानों की महिलाएँ बड़े कौतुक से अपने मुखकमल को ऊपर उठाकर समीप आने वाले तुमको देखेंगी । उनके मुखों पर उत्पन्न पसीने की बूँदें तुम्हारे द्वारा बरसायी गयी जल की बूँदों के साथ मित्रता करके आँखों से पीने के योग्य अर्थात् चिर-काल तक दर्शन योग्य शोभा को धारण करेंगी ।

*English trans* : The women busy in their work in the fields will raise their lotus-like face and look at you with curiousity while you are approaching. The beads of perspiration on their face mixed with the drops of rain will give an excellent beauty to their face to be observed.

उद्यानस्थाः परिणतफलैराम्रवृक्षा विनम्रा
भस्त्राकल्पैः पनसतरवो भासमानाः फलौघैः।
पूगाः क्वापि क्वचिदननसा नारिकेला विशालाः
सञ्जायन्तां जलद ! भवतस्तत्र नेत्रोत्सवाय ॥ २७ ॥

**अन्वयः**—हे जलद ! तत्र क्वापि परिणतफलैः विनम्राः आम्रवृक्षाः, क्वापि भस्त्राकल्पैः फलौघैः भासमानाः पनसतरवः, क्वापि पूगाः, क्वचित् अननसाः, क्वचित् विशालाः नारिकेलाः भवतः नेत्रोत्सवाय सञ्जायन्ताम् ।

**व्याख्या**—उद्यानस्था इति । हे जलद ! मेघ ! तत्र वनवासमण्डले, क्वापि उद्यानस्थाः उपवने विद्यमानाः । परिणतैः पक्वैः, फलैः विनम्राः विनताः, आम्र-वृक्षाः, क्वापि भस्त्रा चर्मप्रसेविका, तत्कल्पैः तत्सदृशैः, 'भस्त्रा चर्मप्रसेविका' इत्यमरः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पपप्रत्ययः । फलानामोघैः समूहैः, भासमानाः शोभमानाः, पनसतरवः पनसवृक्षाः, क्वापि पूगाः क्रमुक-वृक्षाः, 'घोण्टा तु पूगः क्रमुकः' इत्यमरः । क्वचिदननसाः फलविशेषाः, जागर्ति चेयं प्रहेलिका यस्य विषये—'वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्ष एव च । अकारादिसकारान्तं यो जानाति स पण्डितः' ॥ इति । अस्योत्तरं 'अननस' इति । क्वचिद् विशाला नारिकेलाः नारिकेलवृक्षाः, भवतस्तव, नेत्रोत्सवाय नयन-सुखाय, सञ्जायन्तां कल्पन्ताम् । तानवलोक्य हर्षं प्राप्स्यतीत्याशयः ।

**हिन्दी**—हे मेघ ! वहाँ कहीं बगीचों में पके हुए फलों से लदे होने के कारण नीचे की ओर को झुके हुए आम के वृक्ष, कहीं लोहार की धौंकनी के समान दिखलायी देने वाले फलों से शोभित कटहर के वृक्ष, कहीं सुपारी के वृक्ष, कहीं अनन्नास के वृक्ष और कहीं ऊँचे-ऊँचे नारियल के वृक्ष तुम्हारे नेत्रों को आनन्दित करेंगे ।

*English trans* : Oh cloud ! There the mango trees bent down with ripe fruits, the bread-fruit trees appearing charming with fruits as big as the bellows, the betel-nut trees, the pine-apples and the lofty coconut trees in the orchard will please your eyes.

कर्णाटाख्यं घन ! जनपदं गाहमानो नभःस्थः
कृष्णां द्रक्ष्यस्यखिलमहितां सङ्गतां भीमरथ्या ।
स्नात्वा यस्मिन् प्रयतमनसः सङ्गमे पर्वकाले
मुक्तेर्द्वारं चिरमपिहितं क्षिप्रमुद्घाटयन्ति ॥ २८ ॥

**अन्वयः**—हे घन ! नभस्थः कर्णाटाख्यं जनपदं गाहमानः भीमरथ्या सङ्गताम् अखिलमहितां कृष्णां द्रक्ष्यसि । प्रयतमनसः पर्वकाले यस्मिन् सङ्गमे स्नात्वा चिरम् अपिहितं मुक्तेः द्वारं क्षिप्रम् उद्घाटयन्ति ।

**व्याख्या**—कर्णाटाख्यमिति । हे घन ! मेघ ! कर्णाटाख्यं जनपदं देशम्, 'नीवृज्जनपदो देशविषयौ' इत्यमरः । गाहमानः प्रविष्टः, नभःस्थः गगनस्थः, भीमरथ्या तत्संज्ञकनद्या, सङ्गतां मिलिताम्, अखिलैः सर्वैः, महितां पूजिताम्, कृष्णां प्रसिद्धां नदीम्, द्रक्ष्यसि विलोकयिष्यसि, प्रयतं पवित्रं मनो येषां ते, 'पवित्रः प्रयतः पूतः' इत्यमरः । पर्वकाले यस्मिन् सङ्गमे, स्नात्वा चिरं चिरकालम्, अपिहितं प्रतिबद्धम्, मुक्तेर्द्वारं कपाटम्, क्षिप्रं शीघ्रम्, उद्घाटयन्ति । अतएव तस्य 'कपाटसङ्गमः' इत्यन्वर्थसंज्ञा ।

**हिन्दी**—हे मेघ ! तुम आकाशमार्ग से कर्णाटक देश में प्रवेश करने पर भीमरथी नदी से जिसका संगम हो गया है और जो सभी लोगों द्वारा पूजनीय है, उस कृष्णा नदी को देखोगे । पवित्र मन वाले पुरुष पर्वकाल में जिसके संगम में स्नान करके चिरकाल से बन्द हुए मुक्ति के द्वार को खोल लेते हैं। अर्थात् जिसके संगम में स्नान करने पर मुक्ति प्राप्त हो जाती है । अतएव उसकी 'कपाट-संगम' संज्ञा सार्थक है ।

*English trans* : Oh cloud ! while you are flying over the Karnatak region you will behold the universally honoured river Krishna joined with the river Bhimarathi. Those pious persons who take a bath in that confluence on an auspicious day obtain salvation easily which otherwise has a very lengthy course.

स्नातुं तत्र प्रभवसि न चेत् सङ्गमे पुण्यनद्योः
स्थित्वा किञ्चित् कुरु तदुदकैर्मार्जनेनाऽऽत्मशुद्धिम् ।
मत्कार्यार्थं तव जिगमिषोः सत्वरं दूरदेशं
माभूत् स्नानव्यतिहतिभवः सर्वथा धर्मलोपः ।। २९ ।।

**अन्वयः**—तत्र पुण्यनद्योः सङ्गमे स्नातुं न प्रभवसि चेत्, किञ्चित् स्थित्वा तदुदकैः मार्जनेन आत्मशुद्धिं कुरु । मत्कार्यार्थं सत्वरं दूरदेशं जिगमिषोः तव स्नानव्यतिहतिभवः सर्वथा धर्मलोपः माभूत् ।

**व्याख्या**—स्नातुमिति । तत्र तयोः पुण्यनद्योः सङ्गमे, त्वरावशात् स्नातुं न प्रभवसि न शक्नोषि चेत्, क्षणं तत्र स्थित्वा विलम्ब्य, तयोरुदकैः जलैः, मार्जनेन आत्मनः स्वस्य शुद्धिं कुरु । स्नानासम्भवे मार्जनस्य धर्मशास्त्रसम्मतत्वात् । मम कार्यार्थं सत्वरं क्षिप्रम्, दूरदेशं दूरस्थं काश्मीरदेशम्, जिगमिषोः गन्तुमिच्छतः तव, स्नानस्य व्यतिहतिः व्यतिक्रमः तद्भवः, सर्वथा सर्वैः प्रकारैः, धर्मलोपः पुण्यहानिः, माभूत् न भवेत् । माङि लुङ् ।

**हिन्दी**—तुम उन पुण्यनदियों के संगम में स्नान करने में यदि समर्थ नहीं भी हो सकोगे तो कुछ समय तक वहाँ रुककर उसके जल से मार्जन करके अपने आपको अवश्य शुद्ध कर लेना, क्योंकि मेरे कार्य के लिए शीघ्रतापूर्वक दूर देश जाने की इच्छा करने वाले तुम्हारा स्नान न कर सकने के कारण कहीं सर्वथा धर्म का लोप न हो जाय, इसलिये मार्जन स्नान कर कुछ पुण्य का संचय अवश्य ही कर लेना ।

*English trans* : If you are unable to have a dip in the confluence of those holy rivers please halt there for a while and purify yourself by sprinkling it's water on your body. I know that you have to cover **a** very long distance to carry out my mission, still I wish that you should not be at a total loss to acquire some purity.

गच्छन्नग्रे तटमनुसरन् दक्षिणं भीमरथ्याः
सिञ्चन्मार्गे कषितमचिरात् कर्षकैः क्षेत्रजातम् ।
तीरे तस्याः स्थितिमुपगतां कामनाकल्पवल्लि
देवीं साक्षात्कुरु भगवतीं सन्नतौ चन्द्रलाम्बाम् ॥ ३० ॥

**अन्वयः**—मार्गे कर्षकैः अचिरात् कषितं क्षेत्रजातं सिञ्चन्, भीमरथ्याः दक्षिणं तटम् अनुसरन् अग्रे गच्छन् त्वं तस्याः तीरे सन्नतौ स्थितिम् उपगतां कामनाकल्पवल्लि देवीं भगवतीं चन्द्रलाम्बां साक्षात् कुरु ।

**व्याख्या**—गच्छन्निति । मार्गे कर्षकैः कृषीवलैः, अचिरात् कषितं कृष्टम्, क्षेत्रजातं केदारसमूहम्, सिञ्चन् भीमरथ्याः दक्षिणं तटमनुसरन्, अग्रे गच्छन् त्वं तस्याः भीमरथ्याः, तीरे सन्नतौ सन्नतिनाम्नि क्षेत्रे, स्थितिमुपगतां कृत-निवासाम्, कामनानां मनोरथानाम्, कल्पवल्लि कल्पवल्लिमिव पूरयित्रीम्, देवीं भगवतीं षड्विधैश्वर्यशालिनीं चन्द्रलाम्बां साक्षात्कुरु । सन्नतिक्षेत्रे स्थितायाश्चन्द्रलाम्बादेव्याः दर्शनं विधेहीत्यर्थः ।

**हिन्दी**—मार्ग में किसानों द्वारा हाल ही में जोते हुए खेतों को जल से सींचते हुए भीमा नदी के पूर्व तट का अनुसरण करते हुए आगे बढ़ने वाले तुम उस ( भीमा ) नदी के तट-प्रदेश पर स्थित सन्तति-क्षेत्र में निवास करने वाले भक्तों की कामना को पूर्ण करने में कल्पलता के समान समर्थ उस देवी भगवती चन्द्रलाम्बा का अवश्य दर्शन करना ।

*English trans* : Then you proceed further following the right bank of Bhimarathi, sprinkling on your way the fields recently ploughed by the farmers. Please visit the illustrious goddess Chandralamba in the Sannati kshetra which is situated on the bank of that river. This goddess is like a divine-creeper in fulfilling the desires of her devotees.

दूरालोके तव परिपतेद् वारिवाह ! प्रतीच्यां
गोकर्णाख्यं जलधिपुलिने स्थानमर्धेन्दुमौलेः ।
सम्मूर्च्छन्तं मुरजनिनदं तत्र पूजावसाने
शृण्वन् कच्चिद् गमय समयं गर्जितैश्चानुकुर्वन् ।। ३१ ।।

**अन्वयः**—हे वारिवाह ! प्रतीच्यां जलधिपुलिने गोकर्णाख्यम् अर्धेन्दुमौलेः स्थानं तव दूरालोके परिपतेत् । तत्र पूजावसाने सम्मूर्च्छन्तं मुरजनिनदं शृण्वन् गर्जितैः च अनुकुर्वन् कच्चित् समयं गमय ।

**व्याख्या**—दूरालोक इति । हे वारिवाह! मेघ! प्रतीच्यां पश्चिमायां दिशि, जलधेः समुद्रस्य, पुलिने तीरे, गोकर्णाख्यं अर्धेन्दुः मौलौ यस्य तस्य शिवस्य, स्थानं तव दूरालोके दूरतो दृष्टौ, 'आलोकौ दर्शनद्योतौ' इत्यमरः । परिपतेत् आगच्छेत् । दूरं विद्यमानं पश्यसीत्यर्थः । तत्र पूजायाः अवसाने समाप्तौ, सम्मूर्च्छन्तं प्रसरन्तम्, 'सम्मूर्च्छनमभिव्याप्तिः' इत्यमरः । मुरजस्य मृदङ्गस्य । 'मृदङ्गा मुरजा' इत्यमरः, निनदं शब्दम्, शृण्वन् आकर्णयन्, गर्जितैः रसितैः अनुकुर्वंश्च, कच्चित्समयं कालं, गमय नय । अयम्भावः—मुरजशब्दं श्रुत्वा त्वमपि तदनुकरणपरो गर्जितं कुरु ।

**हिन्दी**—हे मेघ ! पश्चिम दिशा में समुद्र के तट पर स्थित गोकर्ण नामक भगवान् शिव का स्थान तुम्हें दिखलायी देगा । वहाँ पूजा की समाप्ति के समय दूर-दूर तक सुनायी देने वाले मृदंग का शब्द सुनते हुए और अपने घन-गर्जन से उस ( मृदंग शब्द ) का अनुकरण करते हुए तुम कुछ समय वहाँ बिताना, अर्थात् मृदंग के समान घन-गर्जन करते हुए तुम भी भगवान् गोकर्ण की पूजा में सम्मिलित हो जाना ।

*English trans* : Oh cloud ! You will see far-off in the west a place called Gokarn the abode of lord Shiva, situated on the sea-shore. There you pass some time hearing the sweet sound of the drums played at the end of the worship and imitate it by your thunders.

आम्रेडन्तो हरिहरिपदं यात्रिणो भक्तिपूर्वं
द्रष्टुं यान्तः शयनदिवसे विट्ठलं पौण्डरीकम् ।
वीणाहस्तास्तरलतुलसीमालयोद्भासिकण्ठा
मध्येमार्गं तव वितनुयुः कीर्तनैः सम्प्रसादम् ।। ३२ ।।

**अन्वयः**—भक्तिपूर्वं हरिहरिपदम् आम्रेडन्तः शयनदिवसे विट्ठलं द्रष्टुं पौण्डरीकं यान्तः, वीणाहस्ताः तरलतुलसीमालया उद्भासिकण्ठाः यात्रिणः मध्येमार्गं कीर्तनैः तव सम्प्रसादं वितनुयुः ।

**व्याख्या**—आम्रेडन्त इति । भक्तिपूर्वं भक्त्या, हरिहरि इति पदम्, आम्रेडन्तः पुनः पुनरुच्चारयन्तः, 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः । शयनदिवसे आषाढशुक्लैकादश्याम् । तद्दिने भगवान् विष्णुः क्षीरसागरे शयनमारभते इति पुराणप्रसिद्धिः । विट्ठलं पाण्डुरङ्गम् । द्रष्टुं, पौण्डरीकं पौण्डरीकक्षेत्रं 'पण्ढरपुरनाम्ना' महाराष्ट्रदेशे प्रसिद्धम् । यान्तः गच्छन्तः, वीणा हस्ते येषां ते, तरला चञ्चला, या तुलसीकाष्ठमणीनां माला तया शोभितः कण्ठः येषां ते, यात्रिणः, मार्गस्य मध्ये इति मध्येमार्गम्, 'पारे मध्ये षष्ठ्या वा' इति समासः । कीर्तनैः हरिकीर्तनैः, तव सम्प्रसादं प्रमोदं वितनुयुः कुर्युः ।

**हिन्दी**—भक्तिभाव से हरि नाम का बार-बार कीर्तन करते हुए आषाढ़ शुक्ल एकादशी के दिन भगवान् विट्ठल के दर्शनार्थ पंढ़रपुर क्षेत्र को जाने वाले हाथ में वीणा लिये हुए, गले में लहराती हुई तुलसी की माला को धारण किये हुये यात्री-गण मार्ग में अपने द्वारा किये जाने वाले कीर्तनों से तुम्हारे मन को आनन्दित करेंगे ।

*English trans* : On your way you will meet the pilgrims going to Pandharpur to visit lord Vitthal on the eleventh day of the bright half of the month of Ashadha. ( Lord Vishnu begins his sleep of four months on this day. ) You will find them repeating the name of lord Vitthal with devotion. They will be carrying lutes in their hands and wearing necklaces of the Tulasi-beads. You will be pleased to hear their religious discourses.

यात्वा भ्रातस्त्वमपि महितं तत्पुरं भक्तिभाजा-
मेकादश्यां स्वयमुपवसन् संस्पृशँश्चन्द्रभागाम् ।
दृष्ट्वा देवं कमलनयनं न्यस्तहस्तं नितम्बे
भाग्याधीनां भज सफलतां जन्मजन्मान्तराणाम् ॥ ३३ ॥

**अन्वयः**—हे भ्रातः ! त्वम् अपि महितं भक्तिभाजां तत् पुरं यात्वा एकादश्यां स्वयम् उपवसन्, चन्द्रभागां संस्पृशन्, नितम्बे न्यस्तहस्तं कमलनयनं देवं दृष्ट्वा जन्मजन्मान्तराणां भाग्याधीनां सफलतां भज ।

**व्याख्या**—यात्वेति । हे भ्रातः ! बन्धो ! त्वमपि महितं पूजितं, मान्यमित्यर्थः । भक्तिभाजां भक्तानाम्, तत्पुरं नगरम्, पण्ढरपुरं भूवैकुण्ठं भक्तानां मातृगृहमिति च प्रसिद्धम् । यात्वा गत्वा, एकादश्यां स्वयमपि उपवसन् उपवासं कृत्वा, चन्द्रभागां तत्रत्यां भीमरथीं नदीम्, सा खलु चन्द्रकलासदृशाकारत्वात् तत्र चन्द्रभागेति व्यवह्रियते । संस्पृशन् स्पृष्ट्वा, आत्मशुद्धिं विधाय, स्नानासम्भवे जलस्पर्शमात्रेण शुद्धिर्भवति । नितम्बे कटिप्रदेशे, न्यस्तौ हस्तौ येन तम्, कमलनयनं पद्मनेत्रम्, देवं विट्ठलम्, दृष्ट्वा साक्षात्कृत्य, जन्मजन्मान्तराणां यद्भाग्यं दैवं, तदधीनां तदायत्तां, सफलतां सार्थकतां, भज प्राप्नुहि । अनेकजन्मार्जितपुण्यसञ्चयेन विट्ठलदर्शनं सुलभं नान्यथेति भावः ।

**हिन्दी**—हे भाई ! तुम भी भक्तों द्वारा अत्यन्त आदरणीय उस नगर में जाकर, एकादशी के दिन स्वयं उपवास करके वहाँ चन्द्रभागा ( भीमा ) नदी के जल का स्पर्श करके, जिन्होंने अपने कटिप्रदेश में हाथ रखे हैं, ऐसे कमलनयन भगवान् विट्ठल का दर्शन करके बड़े भाग्य से प्राप्त होने वाली अनेक जन्मों की सफलता को प्राप्त करना, अर्थात् ऐसे स्थलों का दर्शन सौभाग्य से ही प्राप्त होता है, अन्यथा नहीं ।

*English trans* : Oh brother ! you also should approach that famous place of devotees, observe a fast on the eleventh day and touch the water of the river Chandrabhaga. You should visit lord Vitthal who has lotus-like eyes and who is resting his hands on his waist. Thus you shall be fortunate enough to attain success which is possible after numerous births.

स्थानात् तस्माद्दिवि विचरतः पात्रभावं तवाक्ष्णो-
र्यायादब्धेः प्रियसहचरो दुर्गमः सह्यशैलः ।
अध्यासीनः किमपि गगनस्पर्शि शृङ्गं तदीयं
दुर्गभ्रान्ति रचयतु भवान् दर्शकानां क्षणार्द्धम् ॥ ३४ ॥

**अन्वयः**—तस्मात् स्थानात् दिवि विचरतः तव अब्धेः प्रियसहचरः दुर्गमः सह्यशैलः अक्ष्णोः पात्रभावं यायात् । तदीयं गगनस्पर्शि किमपि शृङ्गम् अध्यासीनः भवान् दर्शकानां क्षणार्धं दुर्गभ्रान्ति रचयतु ।

**व्याख्या**—स्थानादिति । तस्मात् स्थानात्, तत् स्थानं विहाय, ल्यब्लोपे पञ्चमी, दिवि आकाशे, विचरतः गच्छतः, तव । अब्धेः पश्चिमसमुद्रस्य, प्रियः सहचरः सुहृत्, नित्यसान्निध्यात् प्रियसहचरत्वं युज्यते । दुर्गमः दुर्लङ्घ्यः, सह्यशैलः सह्यः पर्वतः, अक्ष्णोः पात्रभावं दृष्टेर्गोचरत्वम्, यायात् प्राप्नुयात्, तदीयं तस्य सह्याद्रेः, गगनस्पर्शि अभ्रंलिहम्, किमपि यत् किञ्चित्, शृङ्गं शिखरम्, अध्यासीनः आरूढः भवान्, दर्शकानां पश्यतां जनानां क्षणार्द्धम् अल्पकालम्, दुर्गस्य 'किला' इति ख्यातस्य, भ्रान्ति भ्रमम्, रचयतु करोतु । महाराष्ट्रदेशे गिरिदुर्गाणां कृष्णपाषाणमयत्वेन प्रावृषेण्यमेघस्य तत्सादृश्यं युक्तम् । महाराष्ट्रदेशे लोहदुर्ग-सिंहदुर्ग-प्रतापदुर्ग-विशालदुर्गप्रभृतयः शतशो गिरिदुर्गाः सह्याद्रेः शिखरेषु सन्ति । अतो मेघस्य गिरिदुर्गभ्रमजनकत्वमुत्प्रेक्षितम् ।

**हिन्दी**—उस स्थान से आकाश की ओर गमन करने वाले तुमको समुद्र के प्रिय मित्र दुर्गम सह्यपर्वत के दर्शन होंगे । गगनचुम्बी उसके किसी शिखर पर बैठे हुए तुम्हें देखकर वहाँ के लोगों को कुछ देर के लिए नये किले का भ्रम होगा । अर्थात् सह्याद्रि के शिखर को घेर कर बैठे हुए तुम्हें न पहचान कर वहाँ के निवासी उसे गिरिदुर्ग समझ बैठेंगे ।

*English trans* : Leaving that place and moving ahead in the sky you will see the inaccessible Sahya-mountain, a dear companion of the ocean. Resting on a lofty peak of that mountain you may create a mis-apprehension of a fort for a moment in the minds of the observers.

यो निःक्षत्रां व्यतनुत कृती भूरिवारान् धरित्रीं
धेनुं भव्यामिव भगवते तां ददौ कश्यपाय ।
क्षिप्त्वा बाणं जलधिमपि यः सारयामास दूरं
तस्यावासस्तव दृशमियात् कोङ्कणो भार्गवस्य ॥ ३५ ॥

**अन्वयः**—यः कृती भूरिवारान् धरित्रीं निःक्षत्रां व्यतनुत । तां धेनुं भव्यामिव भगवते कश्यपाय ददौ । यः बाणं क्षिप्त्वा जलधिम् अपि दूरं सारयामास । तस्य भार्गवस्य आवासः कोङ्कणः तव दृशम् इयात् ।

**व्याख्या**—य इति । यः कृती धन्यः, भूरिवारान् एकविंशतिवारान्, धरित्रीं पृथिवीम्, निःक्षत्रां निर्गताः क्षत्रियाः यस्यास्ताम्, क्षत्रियवर्णशून्याम्, व्यतनुत अकरोत् । यः तां पृथ्वीम्, धेनुं भव्यामिव आसन्नप्रसवां गामिव, भविष्यन्तीं धेनुमिव 'धेनोर्भव्यायाम्' इति मुमागमः । भगवते पूज्याय, कश्यपाय तत्संज्ञकाय मुनये, ददौ दत्तवान् । यः बाणं क्षिप्त्वा विमुच्य, जलधिमपि समुद्रमपि, दूरं सारयामास गमयामास । ब्राह्मणाय प्रदत्तायां भूमौ निवासो न योग्य इति विभाव्य यः बाणक्षेपेण समुद्रं दूरमुत्सार्य स्वनिवासार्थं नूतनं स्थानं निर्ममे । तस्य भार्गवस्य परशुरामस्य आवासः निवासस्थानं कोङ्कणाख्यः प्रदेशस्तव दृशं दृष्टिम्, इयात् गच्छेत् । 'इण् गतौ' इत्यस्माल्लिङ् ।

**हिन्दी**—जिस कार्यकुशल पुरुष ने अनेक ( इक्कीस ) बार पृथिवी को क्षत्रियों से रहित कर दिया था । जिसने उस ( अपने द्वारा जीती हुई ) पृथ्वी को तत्काल बछड़ा देनेवाली गाय जैसा समझ कर भगवान् कश्यप मुनि को दान में दे दिया । जिसने अपने बाण से समुद्र को भी दूर हटा दिया, उस भगवान् भार्गवराम ( परशुराम ) का निवासस्थान कोंकण प्रदेश वहाँ तुम्हें दिखलायी देगा ।

*English trans* : From there you can have a view of the Konkan region, the abode of lord Parashuram. He created it for his residence by discharging an arrow and driving away the ocean. That illustrious person made the earth devoid of the kshatriya caste many times and gave it to the sage Kashyapa as a milch-cow.

नीत्वा दृष्टिं क्षणमपरतस्तस्य नैर्ऋत्यकोणे
देशं पश्येः पनसकदलीनालिकेरैः समृद्धम्।
सौधप्रायं भवनमनघं तत्र गोमान्तके त्वं
दृष्टेर्लक्ष्यं कुरु भगवतः सप्तकोटीश्वरस्य ॥ ३६ ॥

**अन्वयः**—दृष्टिं क्षणम् अपरतः नीत्वा तस्य नैर्ऋत्यकोणे पनसकदली-नालिकेरैः समृद्धं देशं पश्येः। तत्र गोमान्तके त्वं भगवतः सप्तकोटीश्वरस्य सौधप्रायम् अनघं भवनं दृष्टेः लक्ष्यं कुरु।

**व्याख्या**—नीत्वेति। दृष्टिं क्षणं कञ्चित्कालम्, अपरतः अपरत्र, अन्यत्र नीत्वा 'आद्यादिभ्य उपसङ्ख्यानम्' इति सार्वविभक्तिकस्तसिः। तस्य कोङ्कणस्य, नैर्ऋत्यकोणे पनसैः कदलीभिः नालिकेरैश्च समृद्धं सम्पन्नं देशं पश्येः। विलोकय द्रक्ष्यसीत्यर्थः। त्वं तत्र गोमान्तके इदानीं पश्चिमोदधिरोधसि 'गोवा' नाम्ना प्रसिद्धे प्रदेशे, भगवतः षड्विधैश्वर्यशालिनः, सप्तकोटीश्वरस्य तन्नामकस्य शिवस्य, सौधप्रायं प्रासादतुल्यम्, अनघं पवित्रम्, भवनं मन्दिरम्, दृष्टेर्लक्ष्यं कुरु, पश्येत्यर्थः।

**हिन्दी**—तुम अपनी दृष्टि को थोड़ी देर दूसरी ओर ले जाकर उस कोंकण देश के नैर्ऋत्यकोण में कटहल, केला और नारियल के वृक्षों से समृद्ध एक नये देश को देखोगे। उस गोमान्तक ( गोवा ) प्रदेश में जाकर तुम भगवान् सप्तकोटीश्वर के प्रासाद के सदृश विशाल और पवित्र एक मन्दिर को अपनी दृष्टि का लक्ष्य बनाना।

*English trans* : Then for a moment take another view. Have a glance in the south-western direction. You will see a region richly endowed with bread-friut trees, plantains and coconut trees. There in Gomantak you will observe the palatial temple of lord Saptakotishwar.

अप्तः सप्तः किमिह जगतामीश्वरो विद्यते वा
प्रादुर्भूते मनसि विदुषां संशये पूर्वमित्थम् ।
कारुण्याब्धिस्तदपनयनं कर्तुकामो महेशः
सिन्धोस्तीरे निवसति चिरं सप्तकोटीश्वराख्यः ।। ३७ ।।

**अन्वयः**—इह जगताम् ईश्वरः किम् अप्तः सप्तः वा विद्यते इत्थं पूर्वं विदुषां मनसि संशये प्रादुर्भूते ( सति ) तदपनयनं कर्तुकामः कारुण्याब्धिः महेशः सिन्धोः तीरे सप्तकोटीश्वराख्यः चिरं निवसति ।

**व्याख्या**—अप्त इति । इह अस्मिन् जगति, जगतामीश्वरः किम् अप्तः अविद्यमानाः प्ताः जटाः यस्य सः निर्जटः विष्णुर्विद्यते भवति । वा अथवा, सप्तः प्ताभिर्जटाभिः सहितः सजटः भगवान् परशिवो विद्यते भवति । इत्थं जगदीश्वर-धर्मिकपरस्परविरुद्ध-अप्तकोटि-सप्तकोटिविषयकसंशये, विदुषां विद्वज्जनानाम्, मनसि हृदये, प्रादुर्भूते उत्पन्ने सति, तस्य संशयस्य, अपनयनं निरसनम्, कर्तुकामः विधातुमिच्छुः, तत्र सप्तकोटिरीश्वरः सप्तकोटिः भगवान् परशिवः, ईश्वरः जगदीश्वरः नान्यः, इत्थं निश्चाययितुम्, कारुण्याब्धिः करुणासागरः, महेशः भगवान् परशिवः । सप्तकोटीश्वर इत्याख्या यस्य तथोक्तः सन् । सिन्धोः पश्चिमो-दधेः, तीरे पुलिने, चिरं चिरकालम्, निवसति । 'प्ता' इत्येकाक्षरस्य जटावाच-कत्वम् 'सप्ताः सप्ताश्वनुन्नारुणकिरणनिभाः पातु बिभ्रत् त्रिनेत्रः' । इति प्रयोगे प्रसिद्धम् । अत्र सप्ताप्तशब्दौ सजटनिर्जटवाचिनौ सन्तौ शिवविष्णुपरौ, तथा च आदित्यपुराणप्रसिद्धपश्चिमोदधितीरस्थसप्तकोटीश्वरनामनिर्वचनश्लोकः, अद्या-प्यस्ति विपश्चितामपि महत्सन्देहकोटिद्वयं यः श्रुत्या जगदीश्वरो निगदितः सप्तः किमप्तोऽथ सः । तत्रेशः प्रथमैव कोटिरिति किं निश्चायनाय स्फुटं नाम्नैव प्रथितोऽभवत्परशिवः श्रीसप्तकोटीश्वरः' इति ।

**हिन्दी**—क्या यहाँ संसार के ईश्वर (स्वामी) अप्त ( जटारहित विष्णु ) हैं, अथवा सप्त ( जटा सहित शिव ) हैं, इस प्रकार का संशय जब विद्वानों के मन में उत्पन्न हुआ, तब करुणासागर भगवान् शिव उस संशय को दूर करने के लिए पश्चिम समुद्र के तट पर सप्तकोटीश्वर नाम से निवास करने लगे । अर्थात् सम्पूर्ण जगत् का स्वामी सप्तकोटीश्वर ही है, ऐसा उन्होंने वर्णन किया ।

*English trans* : In former times a doubt arose in the minds of the wise persons as to who is the lord of the Universe ? Is he Vishnu who is without matted hair ? or is he Shiva who has matted hair ? To remove this doubt and decide the truth lord shiva assuming the name as Saptakotishwar kindly resides on the sea-shore.

लक्ष्मीमाद्यां तटमुपगतां पञ्चगङ्गापगायाः
सद्यःसिक्तैः सलिलकुसुमैः सम्भ्रमादर्चयित्वा ।
स्थाने स्थाने मधुरनिनदान् नर्तयन्नीलकण्ठान्
पूर्वोद्दिष्टं पुनरपि निजं मार्गमङ्गीकुरुष्व ॥ ३८ ॥

**अन्वयः**—पञ्चगङ्गापगायाः तटम् उपगताम् आद्यां लक्ष्मीं सद्यः सिक्तैः सलिलकुसुमैः सम्भ्रमात् अर्चयित्वा स्थाने स्थाने मधुरनिनदान् नीलकण्ठान् नर्तयन् पुनरपि पूर्वोद्दिष्टं निजं मार्गम् अङ्गीकुरुष्व ।

**व्याख्या**—लक्ष्मीमिति । पञ्चगङ्गापगायाः महाराष्ट्रदेशे प्रसिद्धायाः पञ्चगङ्गानद्याः, तटं तीरदेशम्, उपगतां प्राप्ताम्, पञ्चगङ्गातीरे करवीरनगरे कृतनिवासाम्, आद्यां लक्ष्मीं महालक्ष्मीम्, सद्यः तत्कालम्, सिक्तैः विमुक्तैः, सलिलकुसुमैः सलिलान्येव कुसुमानि तैः, सलिलस्य कुसुमत्वं 'मेघपुष्पं घनरसः' इति कोशेषु प्रसिद्धम् । सम्भ्रमात् मार्गक्रमणे त्वरावशात्, 'सम्भ्रमस्त्वरा' इत्यमरः । अविलम्बमर्चयित्वा पूजयित्वा, स्थाने स्थाने, 'नित्यवीप्सयोः' इति सूत्रेण वीप्सायां द्विर्वचनम् । मधुरः निनदः येषां तान्, मधुरस्वरान् इत्यर्थः । वर्षाकाले मयूराणां स्वरमाधुर्यं सम्पद्यते । नीलकण्ठान् मयूरान्, 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इत्यमरः । नर्तयन् मेघदर्शनेन मयूरा नृत्यन्तीति प्रसिद्धम् । पुनरपि पूर्वमुद्दिष्टं निजं स्वीयं मार्गं पन्थानमङ्गीकुरुष्व स्वीकुरु ।

**हिन्दी**—पञ्चगंगा नदी के तट पर स्थित करवीर क्षेत्र में निवास करने वाली आद्या महालक्ष्मी की तत्काल सींचे गये जलरूपी पुष्पों से यथाशीघ्र पूजा करके, स्थान-स्थान पर मधुर ध्वनि करने वाले मोरों को नचाते ( आनन्दित करते ) हुए तुम फिर अपने पहले मार्ग का अनुसरण करना ।

*English trans* : Please visit the goddess Mahalaxmi on the bank of the river Panchaganga and worship her hurriedly with flowers in the form of rain drops, sprinkled instantly. Then follow your former track making the peacocks utter sweet sounds and dance at every place.

कुर्वन् सद्यः फलपरिणतिं राजजम्बूद्रुमाणां
मार्गस्थानां भृशमुपनयन् केतकानां विकासम् ।
धारासारैः सपदि शमयन् पर्वतानां दवाग्निं
सह्यक्ष्माभृच्छिखरकलितं त्र्यम्बकेशं प्रयाहि ।। ३९ ।।

**अन्वयः**—राजजम्बूद्रुमाणां सद्यः फलपरिणतिं कुर्वन्, मार्गस्थानां केतकानां भृशं विकासम् उपनयन्, धारासारैः सपदि पर्वतानां दवाग्निं शमयन्, सह्य-क्ष्माभृच्छिखरकलितं त्र्यम्बकेशं प्रयाहि ।

**व्याख्या**—कुर्वन्निति । राजजम्बूद्रुमाणां स्थूलाकारस्वादिष्टजम्बूफलप्रभ-वाणां जम्बूवृक्षविशेषाणाम् । तेषां वर्षाकालारम्भे फलपरिणामः सञ्जायते । फलानां परिणतिं परिपाकं सद्यः कुर्वन् । मार्गे स्थितानां केतकानां पुष्पविशेषाणां प्रसिद्धानां भृशमत्यन्तं विकासमुपनयन् जनयन्, धारासारैः अविरलवृष्टिभिः सपदि तत्क्षणं, पर्वतानां दवाग्निं दवानलं ग्रीष्मजनितं, शमयन् प्रशमं नयन्, सह्यक्ष्माभृत् सह्याचलस्तस्य शिखरेण कलितं धृतं त्र्यम्बकेशं महाराष्ट्रे प्रसिद्धं द्वादशज्योतिर्लिङ्गेष्वन्यतमं क्षेत्रं प्रयाहि गच्छ ।

**हिन्दी**—कलमी जामुन के वृक्षों के फलों को तत्काल पकाकर मार्ग में आने वाले केवड़े के फूलों को विकसित कराते हुए, अपनी जलधारा से पर्वतों में लगी हुई आग को बुझाते हुए तुम सह्याचल के शिखर पर विराजमान त्र्यम्बकेश्वर क्षेत्र की ओर जाना ।

*English trans* : On your way ripen the fruits of the Raj-jamun trees instantly, cause the full blooming of Ketak flowers, extinguish the forest-conflagration on the mountains by your heavy showers and reach Tryambakeshwar situated on the peak of Sahya mountain.

अत्राऽवात्सीज्जनकतनयालक्ष्मणाभ्यां समेतो
गोदावर्याः परिसरभुवं संश्रयन् रामचन्द्रः ।
अत्रैवाऽऽसीद् रघुकुलभुवा सङ्गरो राक्षसाना-
मित्यैतिह्यं समभिदधति प्राघुणान् यत्र वृद्धाः ॥ ४० ॥

**अन्वयः**—जनकतनयालक्ष्मणाभ्यां समेतः रामचन्द्रः गोदावर्याः परिसरभुवं संश्रयन् अत्र अवात्सीत् । अत्र एव रघुकुलभुवा राक्षसानां सङ्गरः आसीत् । इति ऐतिह्यं यत्र वृद्धाः प्राघुणान् समभिदधति ।

**व्याख्या**—अत्रेति । जनकतनया सीता तया लक्ष्मणेन च समेतः सहितः, रामचन्द्रः गोदावर्याः परिसरभुवं पर्यन्तभूमिम्, 'पर्यन्तभूः परिसरः' इत्यमरः । संश्रयन् अत्र त्र्यम्बकेश्वरसमीपस्थायां पञ्चवट्याम्, अवात्सीत् उवास । वसधातोर्लुङ् । अत्रैव रघुकुलभुवा रामचन्द्रेण, राक्षसानां खरदूषणप्रभृतीनाम्, सङ्गरः सङ्ग्रामः, आसीत् बभूव । इति ऐतिह्यं पुरावृत्तम्, यत्र त्र्यम्बकेश्वर-जनस्थानवासिनः वृद्धाः, प्राघुणान् अभ्यागतान् बान्धवान्, समभिदधति कथयन्ति ।

**हिन्दी**—राजा जनक की कन्या ( सीता ) तथा लक्ष्मण के साथ भगवान् रामचन्द्र गोदावरी नदी के समीपवर्ती प्रदेश का आश्रय लेकर यहाँ ( पञ्चवटी में ) निवास करते थे । रघुकुल में उत्पन्न श्रीरामचन्द्र का खर-दूषण आदि राक्षसों के साथ यहीं युद्ध हुआ था । इस प्रकार का इतिहास यहाँ ( त्र्यम्ब-केश्वर तथा जनस्थान ) के निवासी वृद्धजन अपने घर में आये हुए अतिथियों को सुनाया करते हैं ।

*English trans* : Lord Ramchandra lived here In the vicinity of the river Godavari with Seeta (daughter of king Janak) and Laxman. There was a batlle between Ram the descendant of Raghu and the demons exactly at this place. Thus the old people here narrate the legendary account to their guests.

पूजाकाले त्रिपुरजयिनस्तत्र रुद्राभिषेके
धारापात्रं भव नवजलैरार्द्रयन्निन्दुमौलिम् ।
आतन्वन्तं मधुररसितैस्तत्र मार्दङ्गिकत्वं
वीक्षिष्यन्ते नगरवनिताः सानुरागं भवन्तम् ।। ४१ ।।

**अन्वयः**—तत्र त्रिपुरजयिनः पूजाकाले रुद्राभिषेके नवजलैः इन्दुमौलिम् आर्द्रयन् धारापात्रं भव । तत्र मधुररसितैः मार्दङ्गिकत्वम् आतन्वन्तं भवन्तं नगरवनिताः सानुरागं वीक्षिष्यन्ते ।

**व्याख्या**—पूजाकाल इति । तत्र त्र्यम्बकेश्वरक्षेत्रे, त्रिपुरजयिनः त्र्यम्बकेश्वरसंज्ञकस्य शिवस्य 'त्र्यम्बकं गौतमीतटे' इति ज्योतिर्लिङ्गपरिगणनम् । पूजाकाले रुद्राभिषेके रुद्रमन्त्रपठनपूर्वकाभिषेके, नवजलैः इन्दुमौलिं शिवम्, आर्द्रयन् क्लेदयन्, धारापात्रमभिषेकपात्रं भव । अभिषेकसमये शिवलिङ्गोपरि सच्छिद्रं पात्रं स्थापयित्वा अभिषेकं कुर्वन्ति । तत्र मधुरैः रसितैः गर्जितैः, 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इत्यमरः । मार्दङ्गिकत्वं मृदङ्गवादनम्, मृदङ्गवादनं शिल्पमस्य इति मार्दङ्गिकः । 'तदस्य शिल्पम्' इति ठक् । आतन्वन्तं कुर्वाणम्, भवन्तं त्वां नगरवनिताः पुरयोषितः, अनुरागेण प्रेम्णा यथा स्यात्तथा सानुरागम्, वीक्षिष्यन्ते अवलोकयिष्यन्ति ।

**हिन्दी**—उस त्र्यम्बकेश्वर तीर्थ में त्रिपुरासुर पर विजय पाने वाले भगवान् शिवजी की पूजा के समय रुद्राभिषेक के अवसर पर अपने नवीन जल से इन्दुमौलि ( शिव ) के शिर को गीला करने वाले तुम स्वयं अभिषेक-पात्र बन जाओ । वहाँ अपने मधुर गर्जनों से मृदङ्गवादन करने वाले तुम्हें नगर-सुन्दरियाँ अत्यन्त रसभरी निगाहों से निहारा करेंगी ।

*English trans* **:** There, at the time of worship of lord Shiva ( conqueror of the three cities ) while bathing with water with Vedic Rudra hymns is done, you should become a sprinkling vessel and moisten the moon crested god ( lord Shiva ) with your fresh water. While you are performing the duty of a drummer by your sweet thunders the ladies of the town will look at you with affetion.

गोदावर्याः पयसि ललना मज्जनाय प्रविष्टाः
सञ्चिन्वाना लहरिवलितैर्गात्रसम्मर्दनानि ।
यत्र भ्राम्यद्भ्रमरसदृशैः कुन्तलै राजमानै-
र्न्यक्कुर्वन्ति स्मितविकसितैराननैः पङ्कजानि ॥ ४२ ॥

**अन्वयः**—यत्र गोदावर्याः पयसि मज्जनाय प्रविष्टाः लहरिवलितैः गात्रसम्मर्दनानि सञ्चिन्वानाः ललनाः भ्राम्यद्भ्रमरसदृशैः कुन्तलैः राजमानैः स्मितविकसितैः आननैः पङ्कजानि न्यक्कुर्वन्ति ।

**व्याख्या**—गोदावर्या इति । यत्र गोदावर्याः पयसि जले, मज्जनाय स्नानाय प्रविष्टाः, लहरीणां वीचीनां, वलितैः चलनैः, गात्राणामवयवानाम्, सम्मर्दनानि संवाहनानि, सञ्चिन्वानाः अनुभवन्त्यः, ललनाः स्त्रियः, भ्राम्यन्तः इतस्ततश्चरन्तः चञ्चलाः इत्यर्थः । ये भ्रमराः भृङ्गाः तत्सदृशैः तत्तुल्यैः, कुन्तलैः चिकुरैः 'चिकुरः कुन्तलो बालः' इत्यमरः । राजमानैः शोभमानैः, स्मितेन ईषद्हसितेन, विकसितैः प्रफुल्लैः, आननैः मुखैः, पङ्कजानि कमलानि, न्यक्कुर्वन्ति तिरस्कुर्वन्ति । पङ्कजेभ्यो मुखानां रमणीयतरत्वादित्यर्थः ।

**हिन्दी**—जहाँ गोदावरी नदी के जल में स्नान करने के लिए प्रविष्ट हुई और उसके जल की लहरों के स्पर्श से अपने अंगों के मर्दन का-सा अनुभव करने वाली स्त्रियाँ घूमने वाले भ्रमरों के सदृश अपने घुँघराले काले बालों से सुशोभित तथा मन्द मुस्कान युक्त अपने मुख-कमलों से वास्तविक कमलों को तिरस्कृत कर देती हैं ।

*English trans* : There the ladies entered in the water of Godavari for a bath enjoy a massage of their limbs by the rolling of the waves. Their faces blooming with smiles and beautiful with the hair which resemble the moving bees excell the lotuses.

कूटात् तस्मादविकृतगतिः किञ्चिदञ्चन्नवाच्यां
गच्छेरभ्रंलिहमभिमतं स्वर्गिणां सप्तशृङ्गम् ।
इष्टामष्टादशभुजयुतां दुष्टविध्वंसहृष्टां
दृष्ट्वा तुष्टो भव नगसुतां कष्टनाशे प्रकृष्टाम् ।। ४३ ।।

**अन्वयः**—तस्मात् कूटात् अविकृतगतिः किञ्चित् अवाच्याम् अञ्चन् स्वर्गिणाम् अभिमतम् अभ्रंलिहं सप्तशृङ्गं गच्छेः । तत्र इष्टाम् अष्टादशभुजयुतां दुष्टविध्वंसहृष्टां कष्टनाशे प्रकृष्टां नगसुतां दृष्ट्वा तुष्टो भव ।

**व्याख्या**—कूटादिति । तस्मात् कूटात्, तत् कूटं त्र्यम्बकेश्वराख्यं शिखरं विहाय, ल्यब्लोपे पञ्चमी । अविकृता विकारमप्राप्ता, गतिः गमनं यस्य सः; पूर्वां गतिमवलम्बमानः, किञ्चित् अवाच्यां दक्षिणस्यां दिशि, अञ्चन् गच्छन्, 'अञ्चु गतिपूजनयोः' इति धातोः शतरि रूपम् । स्वर्गिणां देवानाम्, अभिमतं मान्यमादरणीयमित्यर्थः, अभ्रंलिहं गगनस्पर्शि, 'वहाभ्रे लिहः' इति खश् प्रत्ययः । 'अरुर्द्विषदजन्तस्य' इति मुम् । सप्तशृङ्गं सप्तशृङ्गाख्यं स्थानं, गच्छेः गमिष्यसि । तत्र इष्टाम् आराध्यत्वेन स्वाभीप्सितां अष्टादशभिः भुजैः युतां युक्ताम्, दुष्टानां शुम्भादीनां विध्वंसेन हृष्टां प्रसन्नाम्, तेषां विनाशे तत्परामित्यर्थः । कष्टानां भक्तानां दुःखानाम्, नाशे प्रकृष्टां श्रेष्ठाम्, भक्ततापहारिणीमित्यर्थः । नगस्य हिमालयस्य, सुतां कन्याम्, दृष्ट्वा साक्षात्कृत्य, तुष्टः प्रसन्नो भव । भगवत्या दर्शनेन आत्मानं पावयेत्यर्थः ।

**हिन्दी**—उस शिखर से निरन्तर सीधे चलकर तुम कुछ दक्षिण दिशा की ओर जाते हुए देवताओं के अभिमत गगनचुम्बी सप्तशृंग की ओर जाना । वहाँ अपनी इष्टदेवता अठारह भुजाओं वाली, दुष्टों का विनाश करने से आनन्दित होनेवाली और भक्तों के कष्टों को नष्ट करनेवाली हिमालय की कन्या का दर्शन करके तुम सन्तुष्ट होओगे ।

*English trans* : From there, without changing your gait turn slightly to the south and approach Saptashrung which touches the sky and is desirable to the gods. There you visit the favourite goddess Durga ( daughter of the mountain ). She has eighteen arms. She destroyes the wicked and is efficient in removing the pain of her devotees. You shall be happy to see her.

शृङ्गे तस्मिन् क्षणमुपविशन्नागतैः पश्चिमाब्धे-
र्वार्तालापं सह जलधरैरिष्टमित्रैर्विधाय ।
तानापृच्छ्य प्रणयवचनैः प्राप्य तेषामनुज्ञा-
मिष्टं मार्गं पुनरनुसर प्राङ्मुखः खं प्रविष्टः ॥ ४४ ॥

**अन्वयः**—तस्मिन् शृङ्गे क्षणम् उपविशन् पश्चिमाब्धेः आगतैः इष्टमित्रैः जलधरैः सह वार्तालापं विधाय, प्रणयवचनैः तान् आपृच्छ्य तेषाम् अनुज्ञां प्राप्य, खं प्रविष्टः प्राङ्मुखः पुनः इष्टं मार्गम् अनुसर ।

**व्याख्या**—शृङ्ग इति । तस्मिन् शृङ्गे सप्तशृङ्गे, क्षणं कञ्चित्कालम् उपविशन्, पश्चिमाब्धेः पश्चिमसमुद्रात्, आगतैः इष्टमित्रैः बान्धवैः सुहृद्भिश्च, जलधरैः मेघैः सह वार्तालापं विधाय, प्रणयवचनैः स्नेहमयैः वचोभिः, तानापृच्छ्य 'अधुना यामि' इत्येवमाभाष्य, तेषामनुज्ञामनुमतिं प्राप्य लब्ध्वा, खमाकाशं प्रविष्टः सन्, प्राङ्मुखः पूर्वां दिशमवलम्ब्य, पुनः इष्टमभीप्सितं मार्गं पन्थानम्, अनुसर अनुगच्छ ।

**हिन्दी**—उस सप्तशृंग पर्वत की चोटी पर कुछ समय तक विश्राम कर पश्चिम समुद्र से आये हुए अपने इष्ट-मित्र मेघों से बातचीत करके मधुर भाषण द्वारा उनसे विदाई लेकर, उनकी अनुमति प्राप्त करके आकाश की ओर जाकर, पूर्वदिशा की ओर बढ़कर पुनः अपने अभीष्ट मार्ग का अनुसरण करना ।

*English trans* : Halt there for a while and have a chat with the clouds, your friends and relatives who come there from the western sea. Bid them farewell with affectionate words, take their permission and ascending the sky, facing eastward follow your desired track.

मुञ्चन् बाष्पं जललवमिषाद् विप्रयोगाद् घनानां
गृह्णन् रिक्तः सलिलमभितो निर्झराणां नदीनाम् ।
केदाराणां श्रियमनुभवन् स्वादुपुण्ड्रेक्षुभाजां
रम्यान्नम्यानितरविषयैः प्राप्नुयास्त्वं विदर्भान् ।। ४५ ।।

**अन्वयः**—घनानां विप्रयोगात् जललवमिषात् बाष्पं मुञ्चन् रिक्तः अभितः निर्झराणां नदीनां सलिलं गृह्णन् स्वादुपुण्ड्रेक्षुभाजां केदाराणां श्रियम् अनुभवन् त्वम् इतरविषयैः नम्यान् रम्यान् विदर्भान् प्राप्नुयाः ।

**व्याख्या**—मुञ्चन्निति । घनानां सप्तशृङ्गे मिलितानामिष्टमित्राणां मेघानाम् विप्रयोगात्, जलस्य लवाः विन्दवस्तेषां मिषात् व्याजात्, बाष्पं नेत्राम्बु, मुञ्चन् त्यजन्, त्वया सिक्ता जलबिन्दवः अश्रुतुल्याः स्युरित्यर्थः । जलवर्षणेन रिक्तः अभितः परितः, निर्झराणां वारिप्रवाहानाम्, 'उत्सः प्रस्रवणो वारिप्रवाहो निर्झरो झरः' इत्यमरः । नदीनां सरितां च, सलिलं जलम्, गृह्णन् आददानः, स्वादून् मिष्टान् पुण्ड्रेक्षून् रसालान् 'रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः' इत्यमरः । भजन्ते तादृशानाम्, केदाराणां क्षेत्राणाम्, श्रियं शोभाम्, अनुभवन् पश्यन्, त्वमितरैः विषयैः प्रदेशैः, नम्यान् प्रणन्तुं योग्यान्, रम्यान् रमणीयान्, विदर्भान् देशविशेषान्, प्राप्नुयाः प्राप्स्यसि ।

**हिन्दी**—इष्ट-मित्र मेघों के विरहजनित दुःख से जलवृष्टि के बहाने अपने आँसुओं को बहाते हुए खाली हो जाने पर निर्झरों ( झरनों ) और नदियों के जल को ग्रहण करके जिन खेतों में मीठे गन्ने लगे हैं, उन खेतों की शोभा का अवलोकन करते हुए तुम दूसरे देशों द्वारा प्रणाम किये जाने वाले विदर्भदेश में प्रवेश करना ।

*English trans* : Proceed further shedding tears in the form of showers for the separation from the clouds. When you are empty take the water of the nearby springs and rivers. Enjoy the beauty of the farms rich with sugarcanes. Thus you wili reach the pleasant Vidarbha region which is adorable to all other regions.

कूजत्क्रौञ्चा चटुलशफरा सञ्चरच्चञ्चरीका
क्रीडत्कोका विकचकमला विस्फुरत्पुण्डरीका ।
आगच्छेत् त्वन्नयनसरणिं लोलकल्लोलमाला
भागीरथ्याः प्रकृतिरपरा पुण्यतोया पयोष्णी ।। ४६ ।।

**अन्वयः**—कूजत्क्रौञ्चा चटुलशफरा सञ्चरच्चञ्चरीका क्रीडत्कोका विकचकमला विस्फुरत्पुण्डरीका लोलकल्लोलमाला पुण्यतोया भागीरथ्याः अपरा प्रकृतिः पयोष्णी त्वन्नयनसरणिम् आगच्छेत् ।

**व्याख्या**—कूजत्क्रौञ्चेति । कूजन्तः शब्दायमानाः क्रौञ्चाः पक्षिविशेषाः यस्यां सा, चटुलशफरा चटुलाः चपलाः शफराः मत्स्याः यस्यां सा, सञ्चरन्तः भ्रमरा यस्यां सा । 'भ्रमरश्चञ्चरीकः स्याद् रोलम्बो मधुसूदनः' इति कोशः । क्रीडत्कोकाः क्रीडन्तः कोकाश्चक्रवाकाः यस्यां सा 'कोकश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । विकचानि विकसितानि कमलानि पद्मानि यस्यां सा, विस्फुरन्ति शोभमानानि पुण्डरीकाणि सिताम्भोजानि यस्यां सा 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । लोला चञ्चला कल्लोलानां वीचीनां माला पङ्क्तिः यस्याः सा, पुण्यं पवित्रं तोयं जलं यस्याः सा, भागीरथ्याः गङ्गायाः अपरा अन्या प्रकृतिः मूर्तिः, पयोष्णी विदर्भदेशस्था काव्यपुराणमहाभारतादिषु प्रसिद्धा नदी । त्वन्नयनसरणिं तव नयनयोः सरणिं नेत्रपथमागच्छेत् आगमिष्यतीत्यर्थः ।

**हिन्दी**—जहाँ क्रौञ्च पक्षी कलरव कर रहे हैं, चञ्चल मछलियाँ उछल-कूद मचा रही हैं, भौंरे मडरा रहे हैं, कमल खिले हुए हैं, सफेद कमल शोभित हो रहे हैं और लहरें लहलहा रही हैं, ऐसी भागीरथी नदी की प्रतिमूर्ति पवित्र जल वाली पयोष्णी नदी विदर्भ देश में तुम्हें दिखलायी पड़ेगी ।

*English trans* : You will see there the sacred river, with high rolling waves, called Payoshni. It is another form of Bhagirathi i. e. Ganga. In that river you will observe cooing herons, swift fishes, playful ruddy geese, blooming lilies, beautiful white lotuses with bees hovering over them.

सैषा विष्णोः किटितनुभृतः स्वेदवारिप्रवाहा-
दाविर्भूता विलसति भुवो राजती मेखलेव ।
यस्याः प्रेङ्खत्पवनजनिता रङ्घमाणास्तरङ्गाः
स्वर्गारोहे मृदुतरपदस्थानसाम्यं वहन्ति ॥ ४७ ॥

**अन्वयः**—सैषा किटितनुभृतः विष्णोः स्वेदवारिप्रवाहात् आविर्भूता भुवः राजती मेखला इव विलसति । यस्याः प्रेङ्खत्पवनजनिताः रङ्घमाणाः तरङ्गाः स्वर्गारोहे मृदुतरपदस्थानसाम्यं वहन्ति ।

**व्याख्या**—सैषेति । सैषा पयोष्णी, किटेः वराहस्य तनुं शरीरं बिभर्ति धारयतीति तथोक्तस्य, 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इत्यमरः । स्वेदवारिप्रवाहात् घर्मजलप्रवाहात्, आविर्भूता प्रादुर्भूता 'प्राकाश्ये प्रादुराविः स्यात्' इत्यमरः । भुवो भूमेः राजती रजतस्य विकारभूता, 'प्राणि-रजतादिभ्योऽञ्' इत्यञ् । 'टिड्ढाणञ्' इति ङीप् । मेखला काञ्ची 'स्त्रीकट्यां मेखला काञ्ची' इत्यमरः । विलसति राजति । यस्याः प्रेङ्खन् वहन् यः पवनः वायुस्तेन जनिताः, रङ्घमाणाः उच्छलन्तः, तरङ्गाः कल्लोलाः, स्वर्गस्य आरोहे आरोहणे, मृदुतराणि स्निग्धानि यानि पदस्थानानि पदनिक्षेपस्थानानि 'सीढी' इति प्रसिद्धानि तेषां साम्यं सादृश्यं वहन्ति । यस्यां स्नानादिना सद्यः स्वर्ग-प्राप्तिर्भवतीति भावः ।

**हिन्दी**—यह पयोष्णी नदी वराह अवतार धारण करने वाले भगवान् विष्णु के पसीने की बूँदों से उत्पन्न हुई है, जो पृथ्वी के मध्य में चाँदी की करधनी के सदृश शोभित है । चंचल वायु के झोकों से उछलती हुई उसकी तरंगे स्वर्ग की ओर प्रस्थान करते समय सुकोमल सीढ़ियों की समानता को प्राप्त करती हैं ।

*English trans* : This river was created by the stream of perspiration of the great boar incarnation of lord Vishnu. It looks like a silver girdle of the earth. The rising surges caused by the swinging wind in it appear like soft steps of a stair-case used for ascending the heaven.

यस्याः कूले ललितलवलीकुन्दकुञ्जाभिरामे
नृत्यत्केकिप्रकरमुखरे चारुकूजत्कपोते ।
मार्कण्डेयप्रमुखमुनिभिः सादरं सेव्यमाने
शैलोत्तुङ्गं भवति भवनं क्रोडरूपस्य विष्णोः ॥ ४८ ॥

**अन्वयः**—ललितलवलीकुन्दकुञ्जाभिरामे, नृत्यत्केकिप्रकरमुखरे, चारुकूजत्कपोते मार्कण्डेयप्रमुखमुनिभिः सादरं सेव्यमाने यस्याः कूले क्रोडरूपस्य विष्णोः शैलोत्तुङ्गं भवनं भवति ।

**व्याख्या**—यस्या इति । ललिताः ये लवलीनां लताविशेषाणां कुन्दानां च कुञ्जाः निकुञ्जाः तैः अभिरामे मनोहरे, 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । नृत्यन्तः ये केकिनः मयूराः तेषां प्रकरेण समूहेन मुखरे वाचालिते, मेघदर्शनेन मयूराणां नृत्यं केकाश्च प्रसिद्धाः । चारु यथा स्यात्तथा कूजन्तः कपोताः यत्र, मार्कण्डेयप्रमुखैः मुनिभिः ऋषिभिः, सादरं सेव्यमाने, यस्याः पयोष्ण्याः कूले तीरे, 'कूलं रोधश्च तीरं च' इत्यमरः । क्रोडरूपस्य वराहरूपस्य विष्णोः शैल इव, उत्तुङ्गमुन्नतं भवनं मन्दिरं भवति ।

**हिन्दी**—सुकोमल लवंगलता और कुन्द के कुंजों से चिररमणीय, नृत्य करते हुए मोरों की मीठी आवाजों से गुँजायमान, कबूतरों के सुमधुर कूजन से युक्त, मार्कण्डेय आदि श्रेष्ठ ऋषियों द्वारा सादर सेवन की जाने वाली पुण्य-सलिला पयोष्णी नदी के तट पर भगवान् वराह रूपधारी विष्णु का पर्वत के समान ऊँचा मन्दिर है ।

*English trans* : you will find its bank beautiful with the bowers of charming Lavali and Kunda creepers, noisy with the flocks of dancing peacocks and filled with sweet cooing of the pigeons. It is inhabited by Markandeya and other sages. There is a temple as high as a mountain of the great boar incarnation of lord Vishnu.

ख्यातिं प्राप्तं जगति, वरदातीरदेशे निविष्टं
किञ्चित्प्राच्यामुपसर भुवो मण्डनं कुण्डिनं त्वम् ।
सौधैरुच्चैः स्फटिकमणिभिर्निर्मितैर्भूषितं यत्
प्रत्याख्यानं दिशति नियतं नाकिनामालयस्य ॥ ४९ ॥

**अन्वयः**—जगति ख्यातिं प्राप्तं, वरदातीरे निविष्टं, किञ्चित् प्राच्यां भुवो मण्डनं कुण्डिनम् उपसर। स्फटिकमणिभिः निर्मितैः उच्चैः सौधैः भूषितं यत् नियतं नाकिनाम् आलयस्य प्रत्याख्यानं दिशति ।

**व्याख्या**—ख्यातिं प्राप्तमिति । त्वं जगति ख्यातिं प्रसिद्धिं प्राप्तम्, वरदा विदर्भदेशस्था नदी काव्यपुराणमहाभारतादिषु प्रसिद्धा तस्यास्तीरदेशे निविष्टं स्थितम्, किञ्चित् प्राच्यां पूर्वस्यां दिशि, भुवः पृथिव्याः, मण्डनं भूषणम्, कुण्डिनं नाम नगरं विदर्भाणां राजधानीम्, उपसर गच्छ, स्फटिकमणिभिः निर्मितैः उच्चैः उन्नतैः, सौधैः प्रासादैः, भूषितम् अलङ्कृतं यत्, नियतं नियमेन निःसंशयमित्यर्थः । नाकिनां देवानाम्, आलयस्य स्वर्गस्य, प्रत्याख्यानं निरसनम्, उपहासमित्यर्थः । दिशति करोति । स्वर्गादपि कुण्डिनपुरं मनोहरमित्यर्थः ।

**हिन्दी**—इसके अनन्तर थोड़ा-सा पूर्वदिशा की ओर मुड़कर सम्पूर्ण संसार में जिसकी प्रसिद्धि है, जो वरदा नदी के तट पर बसा हुआ है और जो भूतल का भूषण है, ऐसे कुण्डिन नगर की ओर जाना। स्फटिकमणि से बनाये गये ऊँचे प्रासादों ( राजमहलों और देवमन्दिरों ) से सुशोभित यह नगरी ( अपनी सुन्दरता से ) स्वर्गलोक को भी तुच्छ सिद्ध कर देती है ।

*English trans* : Then go slightly to the east towards Kundin city which is situated on the bank of the river Varada. It is famous in the world as an ornament of the earth. Decorated with marble palaces, it excells heaven the abode of Gods.

धृत्वा कण्ठे बकुलमुकुलैर्गुम्फितान् यत्र हारान्
ताम्बूलेन च्छुरितवदनाः श्मश्रुलाः प्रोन्नतांसाः ।
साभिप्रायं मुहुरभिमुखं वीक्षमाणा गवाक्षान्
सायङ्काले पथिषु रसिका नागराः सञ्चरन्ति ॥ ५० ॥

**अन्वयः**—यत्र सायङ्काले ताम्बूलेन च्छुरितवदनाः श्मश्रुलाः प्रोन्नतांसाः रसिकाः नागराः कण्ठे बकुलमुकुलैः गुम्फितान् हारान् धृत्वा, साभिप्रायम् अभिमुखं गवाक्षान् मुहुः वीक्षमाणाः पथिषु सञ्चरन्ति ।

**व्याख्या**—धृत्वेति । यत्र कुण्डिनपुरे, सायङ्काले दिनावसाने, ताम्बूलेन च्छुरितं रूषितं रक्तवर्णमिति यावत् वदनं येषां ते, श्मश्रुलाः श्मश्रुयुक्ताः ओष्ठोपरिदेशे विद्यमानानि लोमानि श्मश्रुशब्देन व्यवह्रियन्ते । 'तनूरुहं रोमलोम तद्वृद्धौ श्मश्रुपुम्मुखे' इत्यमरः । प्रकर्षेण उन्नताः अंसाः स्कन्धाः येषां ते, वृषस्कन्धा इत्यर्थः, रसिकाः नागराः नगरनिवासिनः, कण्ठे गले, बकुलानां पुष्पविशेषाणां, मुकुलैः कुड्मलैः गुम्फितान्, 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । हारान् धृत्वा, साभिप्रायं अभिप्रायेण सहितं यथा स्यात्तथा, साभिलाषमित्यर्थः । अभिमुखं सम्मुखम्, गवाक्षान् वातायनान्, 'वातायनं गवाक्षोऽथ' इत्यमरः । मुहुः पुनः पुनः, वीक्षमाणाः प्रेक्षमाणाः, पथिषु मार्गेषु, सञ्चरन्ति विहरन्ति । एतेन तत्रत्यानां पौराणां विलासप्रियत्वं सूचितम् ।

**हिन्दी**—जिस कुण्डिनपुर में सायंकाल के समय मुख में पान का बीड़ा रखे हुए बड़ी-बड़ी मूँछों वाले, हट्टे-कट्टे शरीर वाले रसिक नागरिकजन गले में मौलसिरी की कलियों के हारों को धारण करके मौज-मस्ती से महलों की खिड़कियों की ओर बार-बार निहारते हुए सड़कों पर विचरते हैं ।

*English trans* : You will find the amorous citizens of hti s place with beautiful moustache and broad shoulders wearing garlands of Bakul flowers and chewing betel, strolling on the paths in the evening frequently looking at the windows on both the sides.

कृत्वा क्रीडां सरसिजवने चञ्चलैश्चञ्चरीकैः
स्नेहादन्तर्गृहमुपगतः सौधवातायनेन ।
निःसङ्कोचं वपुषि विलुठन् कामिनीनां प्रभाते
यत्र ग्लानिं हरति वरदाशीकरार्द्रः समीरः ।। ५१ ।।

**अन्वयः**—यत्र प्रभाते सरसिजवने चञ्चलैः चञ्चरीकैः क्रीडां कृत्वा स्नेहात् सौधवातायनेन अन्तर्गृहम् उपगतः, निःसङ्कोचं वपुषि विलुठन् वरदाशीकरार्द्रः समीरः कामिनीनां ग्लानिं हरति ।

**व्याख्या**—कृत्वेति । यत्र कुण्डिनपुरे, प्रभाते प्रातःकाले, चञ्चलैः चपलैः, चञ्चरीकैः भ्रमरैः, 'भ्रमरश्चञ्चरीकः स्याद् रोलम्बो मधुसूदनः' इति शब्दार्णवः । सह शब्दप्रयोगं विनाऽपि तृतीया भवति 'वृद्धो यूना' इत्यादि निर्देशात् । क्रीडां कृत्वा, स्नेहात् सौधस्य प्रासादस्य, वातायनेन गवाक्षेण, गृहे इत्यन्तर्गृहम् विभक्त्यर्थेऽव्ययीभावः । उपगतः आगतः, निःसङ्कोचं निर्भयम्, वपुषि शरीरे अर्थात् कामिनीनाम्, विलुठन् विहरन्, वरदायाः तन्नामिकायाः नद्याः, शीकरैः अम्बुकणैः 'शीकरोऽम्बुकणः स्मृतः' इत्यमरः । आर्द्रः क्लिन्नः, समीरः वातः, कामिनीनां विलासिनीनाम्, ग्लानिं रतिक्रीडाजनितं परिश्रमं, हरति अपनयति ।

**हिन्दी**—जिस कुण्डिनपुर में प्रातःकाल चंचल भ्रमरों के साथ कमलवन में विहार करके, बड़े स्नेह के साथ झरोखों के रास्ते घर में प्रवेश करने वाला, बिना किसी संकोच के साथ कामिनियों के अंग-प्रत्यंग को स्पर्श करने वाला वरदा नदी के जलकणों के सम्पर्क से शीतल वायु उनकी थकावट को दूर करता है ।

*English trans :* There in the morning the cool breeze of the Varada river plays with the sportive bees in the cluster of lotuses. Then entering affectionately inside the mansions through the windows rolls fearlessly on the bodies of the beautiful women and remove their fatigue.

बाह्यारामाः सफलकदलीदाडिमभ्राजमाना
नारङ्गाणां परिणतफलैः पीवरैश्चित्रवर्णाः ।
निर्यत्कूपप्रणिहितघटीयन्त्रवारिप्रवाहा-
स्तत्र क्रीडत्कृषकशिशवस्त्वां सखे ! प्रीणयन्तु ॥ ५२ ॥

**अन्वयः**—हे सखे ! तत्र सफलकदलीदाडिमभ्राजमानाः नारङ्गाणां पीवरैः परिणतफलैः चित्रवर्णाः निर्यत्कूपप्रणिहितघटीयन्त्रवारिप्रवाहाः क्रीडत्कृषक-शिशवः बाह्यारामाः त्वां प्रीणयन्तु ।

**व्याख्या**—बाह्यारामा इति । हे सखे ! तत्र कुण्डिनपुरे, सफलाः फलेन सहिताः कदल्यः दाडिमाश्च तैः भ्राजमानाः शोभमानाः, नारङ्गाणां पीवरैः पीनैः, 'वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे' इत्यमरः । परिणतैः पक्वैः फलैः, चित्रवर्णाः शबलाः 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । निर्यन्तः निर्गच्छन्तः कूपे प्रणिहितं योजितं यत् घटीयन्त्रम् उदकोदश्चनसाधनं तस्मात् वारिप्रवाहाः जलप्रवाहाः येषु ते, क्रीडन्तः कृषकाणां कृषीवलानां शिशवः बालकाः येषु ते, बाह्यारामाः नगरस्य बाह्यप्रदेशे स्थिताः आरामाः उपवनानि 'आरामः स्यादुपवनम्' इत्यमरः । त्वां प्रीणयन्तु तोषयन्तु ।

**हिन्दी**—हे मित्र ! फलों से लदे हुए केले तथा दाडिम ( अनार ) के वृक्षों से सुशोभित आकार में बड़े एवं परिपक्व सन्तरों से चित्र-विचित्र वर्ण वाले रहटों द्वारा कुँओं से निकाले गये जल के प्रवाह से युक्त तथा खेलते हुए किसानों के बच्चों से भरपूर नगर के बाहरी भाग में स्थित बगीचे तुम्हारे मन को आनन्दित करेंगे ।

*English trans* : Oh friend ! There are orchards on the out-skirts of that city with plantains and pomegranate tress full of fruits. They are variegated with big and ripe oranges. You shall be pleased to see the streams of water flowing from the machines fixed on the wells and the children of the farmers playing there,

तीर्त्वा तापीं तपनतनयामुच्चलद्वीचिमालां
लीलालोलैश्चिरमनुसृतां सारसैश्चक्रवाकैः ।
अग्रे गत्वा दृढपरिचितं संश्रयन्नाम्रकूटं
तेनाऽऽलापं जलद ! कुशलप्रश्नपूर्वं विधत्स्व ॥ ५३ ॥

**अन्वयः**—हे जलद ! उच्चलद्वीचिमालां लीलालोलैः सारसैः चक्रवाकैः ( च ) चिरम् अनुसृतां तपनतनयां तापीं तीर्त्वा, अग्रे गत्वा दृढपरिचितम् आम्रकूटं संश्रयन् तेन कुशलप्रश्नपूर्वम् आलापं विधत्स्व ।

**व्याख्या**—तीर्त्वेति । हे जलद ! मेघ ! उच्चलन्ती उद्गच्छन्ती वीचीनां तरङ्गाणां माला पङ्क्तिर्यस्याः ताम्, लीलायां क्रीडायां लोलैः सतृष्णैः तत्परैः इत्यर्थः । 'लोलश्चलसतृष्णयोः' इत्यमरः । सारसैः चक्रवाकैश्च जलनिवासिभिः पक्षिविशेषैः 'पुष्कराह्वस्तु सारसः', 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इति चामरः । चिरं चिरकालम्, अनुसृतां सेविताम्, तपनस्य सूर्यस्य, तनयां कन्याम्, तापीं तन्नामिकां पश्चिमसागरगामिनीं नदीम्, तीर्त्वा उल्लङ्घ्य, अग्रे गत्वा दृढं परिचितं तेनैव मार्गेण भूयः उत्तरापथगमनाद् दृढपरिचयो युज्यते । आम्रकूटं पर्वतविशेषम्, आम्रवृक्षाणां बाहुल्यात् तस्य आम्रकूट इति संज्ञा । संश्रयन् आश्रयन्, कुशलस्य क्षेमस्य प्रश्नः कुशलप्रश्नः पूर्वः यस्मिन् कर्मणि यथा स्यात्तथा, चिरकालेन मिलनात् कुशलप्रश्नो युज्यते । आलापं सम्भाषणम्, 'स्यादाभाषणमालापः' इत्यमरः । विधत्स्व कुरु ।

**हिन्दी**—हे मेघ ! जिसमें माला के सदृश लहरें लह-लहा रही हैं, सदैव सारस और चक्रवाक पक्षी जिसमें बिहार किया करते हैं, ऐसी सूर्य की कन्या ताप्ती नदी को पार करते हुए आगे बढ़कर अपने चिरपरिचित आम्रकूट पर्वत से मिलकर कुशल-प्रश्न करते हुए उससे वार्तालाप करना ।

*English trans* : Oh cloud ! You shall come across the river, flowing with high rising waves, Tapi daughter of the Sun, always inhabited by playful cranes and ruddy geese. Cross it, proceed further and approach the mountain Amrakuta. You are well acquainted with it since a long time. You can have a hearty talk with him after inquiring his welfare.

जम्बूवृक्षैः फलभरनतैर्मातुलिङ्गैः प्रियालै-
राच्छन्नोऽसौ क्वचिदुपवनैर्भूभृदाम्रद्रुमाणाम् ।
दत्वा तत्तत्फलमनुगुणं सौहृदस्यानुरूपं
स्नेहार्द्रस्ते गृहमुपगतस्यातिथेयं वितन्यात् ॥ ५४ ॥

**अन्वयः**—क्वचित् फलभरनतैः जम्बूवृक्षैः क्वचित् मातुलिङ्गैः क्वचित् प्रियालैः क्वचित् आम्रद्रुमाणाम् उपवनैः आच्छन्नः स्नेहार्द्रः असौ भूभृत् अनुगुणं तत्तत्फलं दत्वा गृहम् उपगतस्य ते सौहार्दस्य अनुरूपम् आतियेयं वितन्यात् ।

**व्याख्या**—जम्बूवृक्षैरिति । क्वचित् फलानां भरेण आधिक्येन नतैः नम्रैः जम्बूवृक्षैः, क्वचित् मातुलिङ्गैः बीजपूरतरुभिः, 'फलपूरो बीजपूरोरुचको मातुलिङ्गके' इत्यमरः । क्वचित् प्रियालैः राजादनवृक्षैः, 'राजादनं प्रियालः स्यात्' इत्यमरः । क्वचित् आम्रद्रुमाणाम् उपवनैः आच्छन्नः आच्छादितः, स्नेहेन प्रेम्णा आर्द्रः, असौ भूभृत् पर्वतः आम्रकूटः, अनुगुणम् अनुकूलम्, तत्तत्फलं दत्वा, गृहम् उपगतस्य आगतस्य, ते तव, सौहृदस्य मैत्र्याः, अनुरूपं योग्यम्, आतिथेयम् आतिथ्यम्, 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् । वितन्यात् कुर्यात्, करिष्यतीत्यर्थः ।

**हिन्दी**—कहीं फलों के भार से झुके हुए जामुन के वृक्षों के, कहीं बिजौरा-नीबू के वृक्षों के, कहीं चिरौंजी के वृक्षों के और कहीं आम के वृक्षों के उपवनों से ढँका हुआ स्नेह से आर्द्र हृदय वाला यह पर्वत तुम्हारी इच्छा के अनुसार उन-उन फलों को देकर अपने घर आये हुए तुम्हारा अपनी मित्रता के अनुरूप अतिथि सत्कार करेगा ।

*English trans* : You will find that mountain covered with Jamun, citron and Priyal trees bent with the burden of the fruits and with orchards of mango trees in some parts. It will receive you with affection, offer you suitable fruits and show hospitality worthy of its friendship.

आपृच्छ्याऽमुं परमसुहृदं सानुमन्तं प्रयास्यन्
कृत्वा वृष्टिं मुदिर ! बहुलां लाघवं सन्दधानः ।
रेवां प्राप्तो भृशमपनयन्नध्वखेदं प्रसक्तं
त्वं कस्याञ्चित् प्रतिवस मनागुन्नताधित्यकायाम् ॥ ५५ ॥

**अन्वयः**—हे मुदिर ! परमसुहृदम् अमुं सानुमन्तम् आपृच्छ्य प्रयास्यन् बहुलां वृष्टिं कृत्वा लाघवं सन्दधानः रेवां प्राप्तः प्रसक्तं भृशम् अध्वखेदम् अपनयन् त्वं मनाक् उन्नतायां कस्याञ्चित् अधित्यकायां प्रतिवस ।

**व्याख्या**—आपृच्छ्येति । हे मुदिर ! मेघ ! 'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरः । परमसुहृदं प्रियमित्रम्, अमुं सानुमन्तं पर्वतम् आम्रकूटम्, आपृच्छ्य पृष्ट्वा, प्रयास्यन् गमिष्यन्, बहुलां प्रभूताम्, वृष्टिं वर्षम् 'वृष्टिर्वर्षम्' इत्यमरः । कृत्वा विधाय, लाघवं लघुतां सन्दधानः धारयन्, रेवां नर्मदाम् 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । प्राप्तः, प्रसक्तं प्राप्तम्, भृशम् अत्यन्तम्, अध्वखेदं मार्गक्रमणजन्यं परिश्रमम्, अपनयन् दूरीकुर्वन्, त्वं मनाक् ईषत् 'किञ्चिदीषन्मनागल्पे' इत्यमरः । उन्नतायाम् उच्चायाम्, कस्याञ्चित् अधित्यकायाम्, अद्रेः ऊर्ध्वभूम्याम् 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति सूत्रेण अधिशब्दात् त्यकन् । प्रतिवस कञ्चित्कालं वासं कुरु ।

**हिन्दी**—हे मेघ ! अपने परमप्रिय मित्र आम्रकूट पर्वत से बिदाई लेकर आगे की ओर को जाते हुए भरपूर वर्षा करके लघुता को प्राप्त तुम रेवा ( नर्मदा ) नदी के पास पहुँच कर लम्बी यात्रा करने के कारण उत्पन्न थकावट को दूर करने के लिए उसके पास जाकर किसी ऊँचे स्थान पर कुछ देर तक विश्राम कर लेना ।

*English trans :* Oh cloud ! take leave of that dear friend, Amrakuta-mountain and start your further journey. When you will reach the river Rewa, you will be light due to the heavy showers. There you rest on some slightly high table land and remove you excessive fatigue of the journey.

रिक्तो वृष्टचा जलमभिलषन्नर्मदाया ग्रहीतुं
निःशङ्कस्त्वं जलद सहसा मा स्म गास्तत्समीपम् ।
क्रीडासक्ता यदि वनगजास्तिष्ठ दूरं मुहूर्तं
नो विश्वास्याः स्वहितनिरतैर्दन्तिनः शृङ्गिणश्च ।। ५६ ।।

**अन्वयः**—हे जलद ! वृष्टचा रिक्तः नर्मदायाः जलं ग्रहीतुम् अभिलषन् त्वं निःशङ्कः तत्समीपं सहसा मा स्म गाः । यदि वनगजाः क्रीडासक्ताः स्युः तर्हि मुहूर्तं दूरं तिष्ठ । स्वहितनिरतैः दन्तिनः शृङ्गिणश्च नो विश्वास्याः ।

**व्याख्या**—रिक्त इति । हे जलद मेघ ! वृष्टचा वर्षणेन, रिक्तः जलरहितः, अत एव पुनर्वर्षणार्थं नर्मदाया जलं ग्रहीतुम् 'ग्रहोऽलिटि दीर्घः' इति दीर्घः । अभिलषन् इच्छन्, त्वं निःशङ्कः शङ्कारहितः, तस्याः नर्मदायाः, समीपं सन्निकृष्टम्, मा स्म गाः, मा गमः । अत्र 'इणो गा लुङि' इति इणो गादेशः । 'स्मोत्तरे लङ् च' इति सूत्रेण लुङ् । यदि तस्याः नर्मदायाः प्रवाहे वनगजाः आरण्यकाः हस्तिनः, क्रीडासक्ताः केलिप्रसक्ताः स्युः, विन्ध्यवासिनां गजानां नर्मदाजलविहारलोलुपत्वं प्रसिद्धम् । तथा चोक्तम्—'नित्यं ब्रह्म यथा स्मरन्ति मुनयो हंसा यया मानसं, सारङ्गा जलदागमं वनगजा ध्यायन्ति रेवां यथा' इति । मुहूर्तं स्वल्पकालं दूरं तिष्ठ । स्वस्य हिते क्षेमे निरतैः तत्परैः, स्वहितेच्छुभिरित्यर्थः । दन्तिनः दन्तयुक्ताः प्राणिनः, शृङ्गिणः शृङ्गयुक्ताश्च, नो विश्वास्याः विश्वसितुं न योग्याः । 'अर्हे कृत्यतृचश्च' इति सूत्रेण अर्हार्थे कृत्यप्रत्ययः । उक्तं च वृद्धचाणक्ये—'दन्तिनां शृङ्गिणां चैव नखिनां शस्त्रपाणिनाम् । विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च' ।।

**हिन्दी**—हे मेघ ! वर्षा करने से खाली ( भाररहित ) और नर्मदा नदी के जल को ग्रहण करने की इच्छा वाले तुम निःशंक होकर एकाएक उसके समीप मत जाना, यदि जंगली हाथी उस समय नर्मदा के जल में क्रीडा करते हुए तुम्हें दिखलायी दें, तो थोड़ी देर कुछ दूर रुक जाना । अपने हित की इच्छा करने वाले व्यक्ति दाँत वाले और सींग वाले प्राणियों पर विश्वास नहीं करते ।

*English trans* **:** Oh cloud ! being empty due to heavy showers, you will naturally wish to take water of the river Narmada. But do not approach it inconsiderately all at once. If the wild elephants are sporting in that river keep away for a while. Those who desire their welfare should not trust those who have teeth or horns.

प्रातःसन्ध्यासमयमुचितं वर्जयँस्तापसानां
गङ्गामन्यामुपसर सखे ! कन्यकां मेकलस्य ।
दानाम्भोभिः कलुषमुदकं तत्र वन्यद्विपानां
गृह्णन् शङ्कां न कुरु महतां नास्ति दोषप्रसङ्गः ।। ५७ ।।

**अन्वयः**—हे सखे ! उचितं तापसानां प्रातःसन्ध्यासमयं वर्जयन् अन्यां गङ्गां मेकलस्य कन्यकाम् उपसर । तत्र वन्यद्विपानां दानाम्भोभिः कलुषम् उदकं गृह्णन् शङ्कां न कुरु । महतां दोषप्रसङ्गः नास्ति ।

**व्याख्या**—प्रातःसन्ध्यासमयमिति । उचितं योग्यम्, तापसानां तपस्विनाम्, 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः' इत्यमरः । 'तपःसहस्राभ्यां विनीनी अण् च' इति तपःशब्दात् अण् मत्वर्थे । प्रातःसन्ध्यायाः समयं कालम्, वर्जयन् परिहरन्, अन्यामपरां गङ्गाम्, गङ्गातुल्यामित्यर्थः । मेकलस्य कन्यकां पुत्रीं नर्मदाम् 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । उपसर उपगच्छ । तत्र नर्मदायाम्, वन्यद्विपानाम् आरण्यकगजानां, दानाम्भोभिः मदजलैः, कलुषम् आविलम् 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः' इति । 'मदो दानम्' इति । 'कलुषोऽनच्छ आविलः' इति चाऽमरः । उदकं जलम्, गृह्णन् आददानः, शङ्कां विचिकित्सां न कुरु । महतां श्रेष्ठानां नर्मदासदृशानां, दोषस्य प्रसङ्गः सम्भवो नास्ति । तस्याः कलुषितमपि जलं दोषरहितमतः ग्राह्यमेवेत्यर्थः ।

**हिन्दी**—हे मित्र ! तपस्वी लोगों के लिए उचित प्रातःसन्ध्या के समय को छोड़कर तुम दूसरी गंगा कही जानेवाली मेकल पर्वत की कन्या नर्मदा के समीप चले जाना, वहाँ जंगली हाथियों के मदजल से कलुषित हुए उसके जल को ग्रहण कर तुम कुछ भी हिचकिचाहट का अनुभव मत करना, क्योंकि जो महान् होते हैं, उनको कोई दोष नहीं लगता ।

*English trans* : Oh friend ! avoiding the proper time of morning devotion of the ascetics, you should approach Narmada, ( daughter of the Mekal-mountain ) which is another Ganga. Do not hesitate to take its water spoiled by the flow of rut of the wild elephants. There can be no defect in great persons.

आदातुं त्वं जलमुपसृतः पिच्छिलं तीरभागं
तस्याः सम्यक् परिहर पुनः शैवलेनाऽनुषक्तम् ।
कर्तुं कार्यं मम सरभसं गन्तुकामोऽपि दूरं
माभूस्तत्र स्खलनविवशो हास्यपात्रं जनानाम् ।। ५८ ।।

**अन्वयः**—तस्याः जलम् आदातुम् उपसृतः त्वं शैवलेन अनुषक्तं तस्याः पिच्छिलं तीरभागं पुनः सम्यक् परिहर । मम कार्यं कर्तुं सरभसं दूरं गन्तुकामः अपि स्खलनविवशः तत्र जनानां हास्यपात्रं मा भूः ।

**व्याख्या**—आदातुमिति । तस्याः नर्मदायाः, जलमादातुं ग्रहीतुम्, उपसृतः उप समीपं सृतः गतः, त्वं शैवलेन शैवालेन 'जलनीली तु शेवालं शैवलोऽथ कुमुद्वती' इत्यमरः । अनुषक्तं संसृष्टम्, अत एव पिच्छिलं चिक्कणम्, 'लोमादि-पामादिपिच्छादिभ्यः शनेलचः' इति सूत्रेण पिच्छशब्दादिलच् । तीरभागं तटप्रदेशम्, पुनः निश्चयेन, 'स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः' इत्यमरः । सम्यक् यत्नपूर्वकम्, परिहर परित्यज । मम कार्यं सन्देशहरणरूपं कर्तुं, सरभसं सवेगं, सत्वरमित्यर्थः, 'रभसो वेगहर्षयोः' इति विश्वः । दूरं गन्तुं कामो यस्य सः, 'तुं काममनसोरपि' इति मलोपः । तथा सन्नपि, तत्र नर्मदायाः तीरप्रदेशे, स्खलनविवशः स्खलनस्य वशङ्गतः, स्खलित इत्यर्थः । जनानां लोकानां पश्यताम्, हास्यस्य पात्रं भाजनम्, मा भूः न भव । माङि लुङ् । तथा चोक्तम्—'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र समादधति सज्जनाः' ।। इति । तत्र जगति दुर्जनानां बाहुल्यात् हास्यपात्रत्वं युज्यते ।

**हिन्दी**—नर्मदा का जल लेने के लिए उसके पास जाने वाले तुम सिवार युक्त होने के कारण पैरों को फिसलाने वाले उस तट-प्रदेश से अपने को बचाना । मेरे कार्य के लिए शीघ्रता से दूर देश में जाने की इच्छा करने वाले तुम पैर फिसल जाने के कारण वहाँ के लोगों के लिए हँसी के पात्र मत बन जाना ।

*English trans* : When you approach it to collect the water, please carefully avoid that part of the bank which is full of moss and hence slippery. I know that you are in a hurry to cover a long distance on my mission, still I do not want you to be ridiculous by stumbling down.

तामुल्लङ्घ्य क्वचिदपि भवान् विन्ध्यशृङ्गे निषण्ण-
स्तन्वन् वृद्धिभ्रममनुपदं तस्य दूरस्थितानाम् ।
आरभ्यैन्द्रीं दशसु कुरुतां दिक्षु सिंहावलोकं
पादन्यासं प्रवरमतयो दृष्टिपूतं वदन्ति ॥ ५९ ॥

**अन्वयः**—तामुल्लङ्घ्य क्वचिदपि विन्ध्यशृङ्गे निषण्णः दूरस्थितानाम् अनुपदं तस्य वृद्धिभ्रमं तन्वन्, भवान् ऐन्द्रीम् आरभ्य दशसु दिक्षु सिंहावलोकं कुरुतां, प्रवरमतयः पादन्यासं दृष्टिपूतं वदन्ति ।

**व्याख्या**—तामिति । तां नर्मदाम्, उल्लङ्घ्य उत्तीर्य, क्वचिदपि यत्र कुत्रचित्, विन्ध्यस्य शृङ्गे शिखरे, निषण्णः उपविष्टः भवान्, दूरस्थितानां जनानाम् । अनुपदमुपवेशानन्तरमेव, तस्य विन्ध्यस्य, वृद्धिभ्रमं विन्ध्यशैलः पुनरपि वृद्धिं गच्छतीति भ्रान्तिम्, तन्वन् कुर्वन्, मेघस्योपवेशादनन्तरं शृङ्ग-स्यौन्नत्याधिक्यात् वृद्धिभ्रान्तिर्युज्यते, ऐन्द्रीं प्राचीं दिशमारभ्य, दशसु दिक्षु सिंहावलोकं सिंहसदृशावलोकनम्, कुरुतां विधत्ताम् । प्रवरा श्रेष्ठा मतिः येषां ते, पादयोः न्यासं निक्षेपम्, दृष्टिपूतं वदन्ति । 'दृष्टिपूतं न्यसेत् पादम्' इति वचनात् । विन्ध्यशैलोल्लङ्घनेन उत्तरापथं नूतनप्रदेशं प्रविशतो मेघस्य सर्वासु दिक्षु दृष्टिपातः समुपपद्यते ।

**हिन्दी**—नर्मदा नदी को पार करके विन्ध्यपर्वत के किसी शिखर पर तुम्हारे आरूढ होते ही दूर से देखने वालों के मन में यह भ्रम फैलाते हुए कि विन्ध्याचल फिर बढ़ने लग गया है ? तुम पूर्वदिशा से लेकर दसों दिशाओं की ओर एक बार देख लेना, क्योंकि बुद्धिमान् लोगों का कहना है कि भलीभाँति देखकर ही आगे पैर रखना उचित होता है ।

*English trans* : Having crossed that river you should rest on some peak of the Vindhya mountain. Observing you there people at a distance will think that the Vindhya mountain is again growing. From there take a good view of all the directions. The wise men rightly say that one should look before one steps forward.

शैलो विन्ध्यस्तरुभिरितरैर्बिल्ववृक्षैश्च पूर्ण-
श्चित्वा नूत्नं कुसुमनिकरं तत्र बिल्वच्छदांश्च ।
दिव्यं लिङ्गं गिरिगृहगतं नीलकण्ठेश्वराख्यं
तैरभ्यर्च्य क्षणमनुभव ध्यानमग्नः समाधिम् ।। ६० ।।

**अन्वयः**—विन्ध्यः शैलः बिल्ववृक्षैः इतरैश्च तरुभिः पूर्णः ( वर्तते ) तत्र नूत्नं कुसुमनिकरं बिल्वच्छदान् च चित्वा तैः गिरिगृहगतं नीलकण्ठेश्वराख्यं दिव्यं लिङ्गम् अभ्यर्च्य ध्यानमग्नः क्षणं समाधिम् अनुभव ।

**व्याख्या**—शैल इति । विन्ध्यः शैलः पर्वतः, बिल्ववृक्षैः इतरैः बिल्वेतरैश्च तरुभिः पूर्णः वर्तते इति शेषः । विन्ध्यस्य देवताभूमित्वात् तत्र बिल्ववृक्षाणां बाहुल्यं प्रसिद्धम् । तत्र विन्ध्यपर्वते, नूत्नं प्रत्यग्रं पर्युषितपुष्पाणां पूजने निषेधात् 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः । नूत्नश्च' इत्यमरः । 'नवस्य नू-आदेशस्त्नप्तनप्खाश्च प्रत्यया वक्तव्याः' इति नवशब्दस्य नू आदेशः त्नप्प्रत्ययश्च । कुसुमानां पुष्पाणां निकरं निवहम्, बिल्वच्छदान् बिल्वपत्राणि, चित्वा एकत्रीकृत्य, तैः गिरिगृहं गुहा तद्गतं तत्र स्थितं नीलकण्ठेश्वराख्यं दिव्यं लिङ्गमभ्यर्च्य पूजयित्वा, ध्याने मग्नः सन्, क्षणं कञ्चित्कालं समाधिमनुभव । गिरिगह्वरे समाधिर्युज्यते । इदं नीलकण्ठेश्वराख्यं दिव्यलिङ्गं माण्डवदुर्गसमीपे परमरमणीयस्थाने गुहायां वर्तते । यत्रोपरिस्थिततटभागात् लिङ्गोपरि सर्वकालं निर्झरः पतति ।

**हिन्दी**—विन्ध्याचल बेल के वृक्षों से उसके अतिरिक्त अन्य अनेक प्रकार के वृक्षों से भरा-पुरा है । तुम वहाँ जाकर विविध प्रकार के ताजे फूलों और बेल के पत्तों को चुन करके उनसे विन्ध्यपर्वत की गुफा में स्थित श्रीनीलकण्ठेश्वर नामक दिव्य शिवलिंग की पूजा करके ध्यानमग्न होकर थोड़ी देर समाधि-सुख का अनुभव करना ।

*English trans* : The Vindhya mountain is full of Bilwa and other trees. Gather fresh flowers and Bilwa-leaves there worship with them the devine ling called Neelkantheshwar in the cave. Contemplate for a while and enjoy deep meditation.

विन्ध्यारण्ये महति मृगयां कर्तुमाहिण्डमाना
अन्विष्यन्तः प्रहरणकरा धावमानान् वराहान् ।
स्वेदच्छन्नास्तरणिकिरणैस्तप्तदेहाः किराता
लब्ध्वा त्वत्तो नवजलकणानाद्रियन्तां घन ! त्वाम् ॥ ६१ ॥

**अन्वयः**—हे घन ! महति विन्ध्यारण्ये मृगयां कर्तुम् आहिण्डमानाः प्रहरणकराः धावमानान् वराहान् अन्विष्यतः स्वेदच्छन्नाः तरणिकिरणैः तप्तदेहाः किराताः त्वत्तः नवजलकणान् लब्ध्वा त्वाम् आद्रियन्ताम् ।

**व्याख्या**—हे घन ! मेघ ! महति विस्तीर्णे, विन्ध्यारण्ये मृगयामाखेटं कर्तुम् 'आखेटो मृगया स्त्रियाम्' इत्यमरः । आहिण्डमानाः समन्तात् भ्राम्यन्तः, प्रहरणं शस्त्रं कार्मुकादि करे हस्ते येषां ते, धावमानान् वराहान् वन्यसूकरान्, अन्विष्यन्तः अनुगच्छन्तः, स्वेदच्छन्नाः परिश्रमजन्येन घर्मजलेन व्याप्ताः, तरणेः सूर्यस्य किरणैः मयूखैः तप्तो देहो येषां ते, किराताः शबराः, 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः' इत्यमरः । त्वत्तः त्वत्सकाशात्, नवान् नूतनान्, गात्रनिर्वापणकरान् जलकणान् उदबिन्दून्, लब्ध्वा प्राप्य, त्वामाद्रियन्ताम् आदरेण सम्मानयन्तु ।

**हिन्दी**—हे मेघ ! विन्ध्याचल के विशाल वन में मृगया करने के लिए इधर-उधर घूमने वाले, अस्त्र-शस्त्रों को हाथ में लिये हुए, दौड़ते हुए सूअरों का पीछा करनेवाले, जिनका सम्पूर्ण शरीर पसीने से लथ-पथ हो गया है और सूर्य की प्रखर किरणों से जिनके शरीर पर्याप्त संतप्त हो गये हैं, ऐसा किरातगण तुमसे जल की नयी-नयी बूँदों को पाकर तुम्हारा आदर करेगा ।

*English trans :* Oh cloud ! you will come across the mountaineers carrying weapons in their hands wandering for hunting in the vast Vindhy forest chasing the running wild boars. Coverd with perspiration and afflicted by the rays of the scorching sun they will be delighted by your fresh light showers and will honour you.

पीनोत्तुङ्गस्तनतटलुठत्स्थूलगुञ्जाच्छहारा
अर्धोन्मीलन्नवकुवलयप्रोल्लसत्कर्णपूराः ।
हस्तन्यस्तक्वणितवलया गैरिकोद्भासिभालाः
कुर्युः पल्ल्यां शबरवनितास्तत्र नेत्रोत्सवं ते ॥ ६२ ॥

**अन्वयः**—तत्र पल्ल्यां पीनोत्तुङ्गस्तनतटलुठत्स्थूलगुञ्जाच्छहाराः अर्धोन्मीलन्नवकुवलयप्रोल्लसत्कर्णपूराः हस्तन्यस्तक्वणितवलयाः गैरिकोद्भासिभालाः शबरवनिताः ते नेत्रोत्सवं कुर्युः ।

**व्याख्या**—पीनोत्तुङ्गेति । तत्र विन्ध्यगिरौ, पल्ल्यां शबरवसतौ, पीनः पीवरः उत्तुङ्गः उन्नतश्च यः स्तनतटः वक्षोजप्रदेशः तत्र लुठन् चलन् स्थूलगुञ्जानां बृहतां गुञ्जाफलानाम् अच्छः मनोज्ञः हारः यासां ताः, अर्धोन्मीलत्, ईषद् विकसितं यत् नवं नूतनं कुवलयं नीलाम्बुजमेव प्रोल्लसन् कर्णपूरः कर्णभूषणं यासां ताः 'स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च' इत्यमरः । हस्तयोः न्यस्तानि निहितानि क्वणितानि शब्दायमानानि वलयानि कटकानि यासां ताः, 'कटको वलयोऽस्त्रियाम्' इत्यमरः । गैरिकेण शैलजन्येन धातुविशेषेण उद्भासि शोभमानं भालं ललाटं यासां ताः, 'धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः' इत्यमरः । ते तव, नेत्रयोः चक्षुषोः, उत्सवं प्रमोदं कुर्युः ।

**हिन्दी**—विन्ध्याचल में शबरों ( भीलों ) के गाँवों में निवास करनेवाली जिनके पुष्ट एवं उन्नत स्तनमण्डलों पर बड़े-बड़े गुञ्जाफलों ( घुँघची ) की मालाएँ झूम रही हैं। आधे खिले हुए नये नीलकमल जिनके कानों में कनफूलों के समान शोभा दे रहे हैं, जिनके हाथों में कंगनों की झनकार हो रही है और जिनके ललाटपटल गेरू के तिलक लगाने से शोभायमान हो रहे हैं, ऐसी शबरसुन्दरियाँ तुम्हारे नेत्रों को आनन्दित करेंगी ।

*English trans* : There in small villages you will be delighted to see the Shabar-females wearing fine garlands of big Gunja fruits on their plump and high breasts, having half blown fresh blue lotus as an ear-ornament, with armlets jingling in their hands and their foreheads smeared with red-chalk.

कुञ्जा गुञ्जद्भ्रमरपटला मण्डपा माधवीनां
नीरन्ध्राणि स्फुटितसुमनोभाञ्जि रम्भावनानि ।
प्रायो विन्ध्यक्षितिधरगुहागह्वराण्यङ्गनानां
सम्पद्यन्ते शबरवसतौ यत्र लीलागृहाणि ।। ६३ ।।

**अन्वयः**—यत्र शबरवसतौ गुञ्जद्भ्रमरपटलाः कुञ्जाः, माधवीनां मण्डपाः नीरन्ध्राणि स्फुटितसुमनोभाञ्जि रम्भावनानि, विन्ध्यक्षितिधरगुहागह्वराणि अङ्गनानां प्रायः लीलागृहाणि सम्पद्यन्ते ।

**व्याख्या**—कुञ्जा इति । यत्र विन्ध्यपर्वते, शबराणां किरातानाम्, वसतौ पक्कणे, 'पक्कणः शबरालयः' इत्यमरः । गुञ्जन्ति भ्रमराणां भृङ्गाणां पटलानि कदम्बकानि येषु ते, 'समूहे पटलं न ना' इत्यमरः । कुञ्जाः निकुञ्जाः माधवीनां वासन्तीलतानां मण्डपाः, 'वासन्ती माधवीलता' इत्यमरः । नीरन्ध्राणि निबिडानि, स्फुटिताः उन्मीलिताः सुमनसः पुष्पाणि भजन्ति तानि विकसितपुष्पयुक्तानीत्यर्थः । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । रम्भाणां कदलीनां वनानि, विन्ध्यक्षितिधरः विन्ध्यपर्वतः, तस्य गुहा गह्वराणि च, प्रायो बाहुल्येन, अङ्गनानां स्त्रीणाम्, लीलागृहाणि क्रीडास्थलानि, सम्पद्यन्ते जायन्ते ।

**हिन्दी**—उस विन्ध्याचल के अन्तर्गत शबरों की बस्ती के आस-पास होने वाले स्थान जहाँ भौंरों के झुंड गुन-गुना रहे हैं, ऐसे अनेक कुञ्ज, माधवीलताओं द्वारा निर्मित अनेक मण्डप, घने तथा खिले हुए पुष्पोंवाले केलों के वन और विन्ध्यपर्वत की गुफाएँ प्रायः ये सभी शबरयुवतियों के लिए बिहारभूमियाँ होती हैं ।

*English trans* : There in the habitations of the mountaineers the bowers covered with the flocks of humming bees, the arbours of Madhavi creepers, the thick plantain-groves with blooming flowers and the caves and caverns of the Vindhya-mountain become pleasure-houses for the women.

हित्वा विन्ध्याचलतटभुवं सम्प्रयातो दशार्णान्
ख्यातां तेषां जगति विदिशां राजधानीं भजस्व ।
हर्म्यैः सौधैः प्रमदविपिनैर्निष्कुटैर्मण्डिता या
स्वर्गच्छाया पयसि विमले वेत्रवत्या विभाति ॥ ६४ ॥

**अन्वयः**—विन्ध्याचलतटभुवं हित्वा दशार्णान् सम्प्रयातः तेषां जगति ख्यातां राजधानीं विदिशां भजस्व । हर्म्यैः सौधैः प्रमदविपिनैः निष्कुटैः च मण्डिता या वेत्रवत्याः विमले पयसि स्वर्गच्छाया विभाति ।

**व्याख्या**—हित्वेति । विन्ध्याचलस्य तटभुवं तटप्रदेशं, हित्वा परित्यज्य, दशार्णान् तदाख्यं देशविशेषम्, सम्प्रयातः प्राप्तः, तेषां दशार्णानाम्, जगति ख्यातां प्रसिद्धाम्, राजधानीं प्रधाननगरीम्, 'प्रधाननगरी राज्ञां राजधानीति कथ्यते' इति शब्दार्णवः । भजस्व सेवस्व । हर्म्यैः धनिनां निवासैः, सौधैः राजसदनैः, 'हर्म्यादि धनिनां वासः' इति । 'सौधोऽस्त्री राजसदनम्' इति चाऽमरः । प्रमदविपिनैः प्रमदवनैः, निष्कुटैः गृहारामैः, 'गृहारामास्तु निष्कुटाः' 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम्' इत्यमरः । मण्डिता भूषिता, या विदिशा, वेत्रवत्याः तत्रत्यायाः नद्याः, विमले स्वच्छे, पयसि जले, स्वर्गस्य च्छाया प्रतिबिम्बम्, विभाति शोभते, स्वर्गतुल्येत्यर्थः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः ।

**हिन्दी**—विन्ध्याचल के तट-प्रदेशों को छोड़कर आगे दशार्ण देश में जाकर तुम उसकी विश्वप्रसिद्ध राजधानी विदिशा में जाकर कुछ दिन निवास करो । धनिकों के महलों, राजाओं के प्रासादों से, प्रमदवनों तथा गृहारामों ( नजर-बागों ) से सुशोभित वह नगरी वेत्रवती नदी के स्वच्छ जल में स्वर्ग के प्रतिबिम्ब जैसी दिखलायी देती है ।

*English trans* : Leave the Vindhya-mountain and proceed further. After reaching the Dasharn country go to its capital Vidisha. It is famous in the world. With it's mansions, palaces, female-gardens and pleasure-groves it looks like a reflection of the heaven in the clear water of the river Vetravati.

शिप्रातीरे स्थितिमुपगतां भूषणं मालवानां
द्रक्ष्यस्यग्रे प्रथितविभवां निःसपत्नां विशालाम् ।
आसीद् यस्या निरवधिगुणो विक्रमाङ्को नृपालः
कीर्तिर्यस्य क्षितिपरिसरे निस्तुला बम्भ्रमीति ।। ६५ ।।

**अन्वयः**—अग्रे शिप्रातीरे स्थितिम् उपगतां मालवानां भूषणं प्रथितविभवां निःसपत्नां विशालां द्रक्ष्यसि । यस्याः निरवधिगुणः विक्रमाङ्कः नृपालः आसीत् । यस्य निस्तुला कीर्तिः क्षितिपरिसरे बम्भ्रमीति ।

**व्याख्या**—शिप्रातीर इति । अग्रे शिप्रायाः तन्नामिकायाः नद्याः, तीरे तटे, स्थितिमुपगतां स्थिताम्, मालवानां तदाख्यदेशविशेषाणाम्, भूषणमलङ्कारभूताम्, प्रथितं प्रसिद्धं विभवमैश्वर्यं यस्यास्ताम्, निःसपत्नामप्रतिपक्षाम्, विशालामुज्जयिनीम्, द्रक्ष्यसि अवलोकयिष्यसि । यस्याः उज्जयिन्याः, निरवधयः गुणाः यस्य सः, अनन्तगुण इत्यर्थः । विक्रमाङ्कः विक्रमादित्यः, नृपालः राजा, आसीत् बभूव । यस्य विक्रमादित्यस्य, निस्तुला अतुला, कीर्तिः यशः, क्षितेः पृथिव्याः परिसरे पर्यन्तभुवि, बम्भ्रमीति भृशं भ्राम्यति । भ्रमेर्यङ्लुगन्तस्य रूपम् । 'विशालोज्जयिनी समे' इति त्रिकाण्डशेषः ।

**हिन्दी**—आगे जाकर तुम शिप्रा नदी के तट पर स्थित मालव देश की अलंकारस्वरूप जिसका वैभव सर्वत्र सुप्रसिद्ध है और जिसके समान कोई दूसरी नगरी नहीं है, ऐसी विशाला ( उज्जयिनी ) नगरी को देखोगे । अनन्त गुणों का आकर विक्रमादित्य इसी नगरी का राजा था, जिसकी अतुलनीय कीर्ति पृथ्वी के चारों ओर आज भी भ्रमण कर रही है ।

*English trans :* Going further you will come across the unequalled city Vishala i. e. Ujjayini situated on the bank of the river Shipra. It is an ornament of the Malawa region and renowned for its wealth. In former days the illustrious Vikramaditya was its king. His incomparable fame still cherishes on the earth.

आसीद् यस्यां द्विजकुलभवः सार्थवाहो वदान्यः
कामो मूर्तः क्षितितललुठत्सद्यशाश्चारुदत्तः ।
दुष्टं स्वस्मिन्नपकृतिपरं घातकं यः शकारं
राजश्यालं मृदुलहृदयः शूलबन्धाद् ररक्ष ॥ ६६ ॥

**अन्वयः**—यस्यां द्विजकुलभवः वदान्यः क्षितितललुठत्सद्यशाः मूर्तः कामः चारुदत्तः सार्थवाहः आसीत् । मृदुलहृदयः यः दुष्टं स्वस्मिन् अपकृतिपरं घातकं राजश्यालं शकारं शूलबन्धाद् ररक्ष ।

**व्याख्या**—आसीदिति । यस्यामुज्जयिन्याम्, द्विजकुलभवः ब्राह्मणवंशजन्यः, क्षितितले पृथिव्यां लुठत् प्रसरत् सद्यशः यस्य सः, वदान्यः उदारः, मूर्तः मूर्तिमान्, कामः मदनः, चारुदत्तनामा सार्थवाहः वैदेहकः, 'वैदेहकः सार्थवाहः' इत्यमरः । आसीत् बभूव । मृदुलं कोमलं हृदयं यस्य सः, यः दुष्टं स्वस्मिन् अपकृतिपरमपकारतत्परं घातकं, वसन्तसेनायाः गणिकायाः घातकारिणम्, राज्ञः पालकस्य, श्यालं पत्न्याः भ्रातरम्, 'श्यालाः स्युर्भ्रातरः पत्न्याः' इत्यमरः । शकारं शूलबन्धात्, ररक्ष रक्षितवान् ।

**हिन्दी**—जिस ( उज्जयिनी नगरी ) में ब्राह्मण कुल में उत्पन्न दाता, जिसका सुयश समस्त भूतल में प्रसिद्ध है, मूर्तिमान् कामदेव के सदृश चारुदत्त नाम का साहूकार रहता था । अत्यन्त करुण हृदय वाले उस चारुदत्त ने अपने साथ अपकार करनेवाले, स्वभाव से दुष्ट, घातक राजा के साले शकार को 'इसे शूली पर चढ़ाकर मार डालो' इस प्रकार की राजाज्ञा होने पर भी उसे बचा लिया ।

*English trans* : There was a famous Brahmin merchant called Charudatta in Ujjayini. He was very kind-hearted, generous and cupid incarnate. Shakar the brother-in-law of the king was a very wicked fellow, a murderer. He hated Charudatta very much and always tried to harm him. Still Charudatta saved him from the gallows.

तस्यामभ्रङ्कषमनुपमं मन्दिरं मन्दराभं
चारुस्तम्भं विलसति महाकालमूर्तेः शिवस्य ।
पूजाकाले त्वमपि विचरन्नौपरिष्टः प्रदोषे
पुण्यं लब्धा स्मरविजयिनस्तत्र कृत्वाऽभिषेकम् ॥ ६७ ॥

**अन्वयः**—तस्यां महाकालमूर्तेः शिवस्य अभ्रङ्कषम् अनुपमं चारुस्तम्भं मन्दराभं मन्दिरं विलसति । तत्र प्रदोषे पूजाकाले त्वमपि औपरिष्टः विचरन् स्मरविजयिनः अभिषेकं कृत्वा पुण्यं लब्धा ।

**व्याख्या**—तस्यामिति । तस्यामुज्जयिन्याम्, महाकालमूर्तेः शिवस्य, अभ्रङ्कषमभ्रं कषतीति गगनस्पर्शि 'सर्वकूलाभ्रकरीषेषु कषः' इति खच् प्रत्ययः । अनुपमं नास्ति उपमा यस्य तत्, चारुस्तम्भं रमणीयस्तम्भसहितम्, मन्दराभं मन्दरपर्वततुल्यम्, उत्तुङ्गमित्यर्थः । मन्दिरं विलसति । त्वं तत्र मन्दिरे, प्रदोषे प्रदोषकाले पूजासमये, औपरिष्टः उपरिष्टाद्भवः इत्यर्थे अण् प्रत्ययः । 'अव्ययानां भमात्रे टिलोपः' विचरन् विहरन्, मन्दिरस्य उपरिदेशे स्थितः सन्, स्मरविजयिनः शिवस्य, अभिषेकं कृत्वा जलविसर्जनेन अभिषिञ्चन्, पुण्यं लब्धा सुकृतं लप्स्यसे । लब्धेति लभधातोस्तृन्नन्तस्य रूपम् ।

**हिन्दी**—उस ( उज्जयिनी ) में महाकाल नामक शिवजी का गगनस्पर्शी, सुन्दर स्तम्भों से युक्त मन्दर पर्वत जैसा अनुपम मन्दिर विराजमान है । वहाँ प्रदोषकालिक पूजा के समय तुम भी ऊपर से मँडराते हुए कामदेव के विनाशक शिवजी का अपने अभिनव जल से अभिषेक करके पुण्य प्राप्त करोगे ।

*English trans* : There is an excellent temple of Mahakala ( a form of Shiva ) in Ujjayini. It has beautiful pillars and it is as high as the Mandar mountain. At the evening worship you move over that temple in the sky and sprinkling lord Shiva destroyer of cupid attain purity.

अत्रैवासीदुपनदि महाभीषणं तच्छ्मशानं
पूर्वं यस्मिन्नवसदधमः सोऽपि कापालिकानाम् ।
वेतालोऽपि स्थितिमिह शमीपादपाग्रे व्यतानी-
दित्यैतिह्यं निगदति जनो यत्र बन्धूनुपेतान् ॥ ६८ ॥

**अन्वयः**—अत्र एव उपनदि तत् महाभीषणं श्मशानम् आसीत् । यस्मिन् पूर्वं सः अपि कापालिकानाम् अधमः अवसत् । वेतालः अपि इह शमीपादपाग्रे स्थितिं व्यतानीत् । इति ऐतिह्यं यत्र जनः उपेतान् बन्धून् निगदति ।

**व्याख्या**—अत्रैवेति । अत्र एव अस्मिन् स्थाने एव, उपनदि नद्याः समीपे इति उपनदि, सामीप्यार्थे अव्ययीभावः । 'नदीपौर्णमास्याग्रहायणीभ्यः' इति वैकल्पिकटजभावे नपुंसकह्रस्वत्वम् । महाभीषणं महाभयङ्करम्, तत् वेताल-कथासु प्रसिद्धम्, श्मशानमासीत् । यस्मिन् श्मशाने, पूर्वं पूर्वकाले, सोऽपि प्रसिद्धः, कापालिकानामधमः निकृष्टः, अवसत् उवास । वेतालोऽपि इह शमी-पादपस्य शमीवृक्षस्य अग्रभागे, स्थितिं निवासम्, व्यतानीत् अकरोत् । इति ऐतिह्यं पुरातनं कथावृत्तम्, जनः उज्जयिनीस्थः यत्र उज्जयिन्याम्, उपेतान् प्राघूर्णिकान् बन्धून्, निगदति कथयति ।

**हिन्दी**—यहीं शिप्रा नदी के तट पर वेताल-कथाओं में प्रसिद्ध अति भीषण वह श्मशान था, जिसमें पहले वह दुष्ट कापालिक रहता था । वेताल भी इसी शमी वृक्ष के अग्रभाग में रहता था । इस प्रकार की कथाएँ यहीं के लोग अपने घर में आये हुए बन्धुजनों को (नगर दिखलाते समय) सुनाया करते हैं ।

*English trans* : Here, near the river was the terrific cemetery. Once that wicked Kapalik lived in it. The Vetal also was living on the top of this Shami tree. Thus the people here narrate the legend to their relatives who visit them.

प्रासादानामुपरि विहरन्नाश्रयँश्चन्द्रशालां
गोपानस्यां क्षणमुपविशन् प्रेक्षमाणो गवाक्षैः ।
सिञ्चन्नद्भिः क्वचिदुपवनं लासयन् केकिवृन्दं
लक्ष्मीं तस्याः शिशुरिव पुरो मुक्तशङ्कं जुषस्व ॥ ६९ ॥

**अन्वयः**—क्वचित् प्रासादानाम् उपरि विहरन्, क्वचित् चन्द्रशालाम् आश्रयन्, क्वचित् गोपानस्यां क्षणम् उपविशन्, क्वचित् गवाक्षैः प्रेक्षमाणः, क्वचिद् अद्भिः उपवनं सिञ्चन्, क्वचित् केकिवृन्दं लासयन्, त्वं शिशुरिव तस्याः पुरः लक्ष्मीं मुक्तशङ्कं जुषस्व ।

**व्याख्या**—प्रासादानामिति । क्वचित् ( एतत्पदं सर्वत्रान्वेति ) प्रासादानां सौधानाम्, 'प्रासादो देवभूभुजाम्' इत्यमरः । उपरि ऊर्ध्वभागे, विहरन् विहारं कुर्वन्, चन्द्रशालामाश्रयन्, गोपानस्यां वलभी छादने वक्रदारुणि, 'गोपानसी तु वलभी छादने वक्रदारुणि' इत्यमरः । क्षणं स्वल्पकालम्, उपविशन् विश्राम्यन्, गवाक्षैः वातायनैः, 'वातायनं गवाक्षोऽथ' इत्यमरः । गृहान्तर्भागे प्रेक्षमाणः, अद्भिः जलैः; 'अपोभि' इति तकारादेशः । उपवनं सिञ्चन्, केकिनां मयूराणाम्, वृन्दं कदम्बम्, लासयन् नर्तयन्, त्वं तस्याः पुरः, नगर्याः उज्जयिन्याः, लक्ष्मीं शोभाम्, शिशुरिव बाल इव, यथा चपलो बालः एकत्र स्थातुमशक्नुवन् इतस्ततः परिभ्रमति तथा मुक्तशङ्कं निःशङ्कम्, जुषस्व सेवस्व । 'जुषी प्रीतिसेवनयोः' लोटि रूपम् ।

**हिन्दी**—कहीं प्रासादों ( राजमहलों ) के ऊपर विहार करते हुए, कहीं चन्द्रशालाओं का आश्रय लेकर, कहीं थोड़ी देर छत पर बैठकर, कहीं खिड़कियों के अन्दर से झाँककर, कहीं जलवृष्टि से उपवनों को सींचते हुए, कहीं मोरों को नचाते हुए एक बालक की भाँति ( जो एक स्थान पर स्थिर नहीं रह सकता ) निःशंक होकर तुम उस नगरी की शोभा का अनुभव करना ।

*English trans* : Stroll playfully on the mansions, rest on the upper rooms, stop for a while on the roofs, peep through the windows, sprinkle the gardens with light showers and make the peacocks dance. Thus acting like a naughty child you enjoy the splendour of that city without any hesitation.

एवं कृत्वा सरणिषु भवानुज्जयिन्या विहारं
सङ्कीर्णासु द्विरदतुरगैर्गन्तृभिः पौरलोकैः।
भ्रान्त्वा पश्यन्नगरविपणावद्भुतं वस्तुजातं
प्राकाराग्रादभिदशपुरं गाहतां व्योममार्गम् ॥ ७० ॥

**अन्वयः**—एवं भवान् द्विरदतुरगैः गन्तृभिः पौरलोकैः सङ्कीर्णासु उज्जयिन्याः सरणिषु विहारं कृत्वा, भ्रान्त्वा नगरविपणौ अद्भुतं वस्तुजातं पश्यन् प्राकाराग्रात् अभिदशपुरं व्योममार्गं गाहताम्।

**व्याख्या**—एवमिति। एवमनेन प्रकारेण, भवान् उज्जयिन्याः, द्विरदतुरगैः गन्तृभिः गजाश्वानारुह्य गच्छद्भिः, पौरलोकैः पुरवासिभिः जनैः, सङ्कीर्णासु सङ्कुलासु, 'सङ्कीर्णे सङ्कुलाकीर्णे' इत्यमरः। सरणिषु मार्गेषु, विहारं सुखेन सञ्चारम्, कृत्वा विधाय, भ्रान्त्वा नगरस्य विपणौ पण्यवीथिकायां, 'विपणिः पण्यवीथिका' इत्यमरः। अद्भुतमाश्चर्यजनकम्, वस्तुजातं वस्तुसमूहं पश्यन्, प्राकाराग्रात् प्राकाराग्रमारुह्य, ल्यब्लोपे पञ्चमी। अभिदशपुरं दशपुरमभिमुखीकृत्य, 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। व्योममार्गमाकाशमार्गं, गाहताम् आश्रयतु।

**हिन्दी**—इस प्रकार हाथी और घोड़े पर सवार होकर आने-जाने वाले नगरवासियों से व्याप्त उज्जयिनी नगरी के मार्गों पर घूमकर, नगर के बाजारों में घूमते हुए वहाँ की आश्चर्यजनक अतएव दर्शनीय वस्तुओं को देखकर प्राकार (परकोटा) के अग्रभाग पर चढ़कर तुम आकाशमार्ग से दशपुर की ओर प्रस्थान करना।

*English trans* : Thus you roam on the streets of Ujjayini crowded by citizens riding elephants and horses. Visit the market place and see the marvellous things there. Then ascend the rampart and facing Dashapur proceed through the sky.

आक्रामन्तं खगमिव जवादाह्वयेद् वीचिहस्तै-
र्वृष्टिक्षीणं सरिदघहरा मेघ ! चर्मण्वती त्वाम् ।
तामादर्तुं भुवमवतरँस्तज्जलान्याददानः
प्राप्स्यस्येवं सुकृतवपुषोस्तुल्यकालं विवृद्धिम् ।। ७१ ।।

**अन्वयः**—हे मेघ ! अघहरा सरित् चर्मण्वती वृष्टिक्षीणं खगमिव जवात् आक्रामन्तं त्वां वीचिहस्तैः आह्वयेत् । ताम् आदर्तुं भुवम् अवतरन् तज्जलानि आददानः एवं सुकृतवपुषोः तुल्यकालं विवृद्धिं प्राप्स्यसि ।

**व्याख्या**—आक्रामन्तमिति । हे मेघ ! अघहरा पापनाशिनी, सरित् नदी चर्मण्वती, वृष्टिभिः क्षीणं स्वल्पजलम्, अत एव खगमिव विहगमिव, जवात् वेगेन, आक्रामन्तं गच्छन्तम्, त्वां वीचिहस्तैः वीचिरूपैः करैः, आह्वयेत् आकारयेत् । तामादर्तुं सम्मानयितुम्, भुवं पृथिवीम्, अवतरन् तस्याः जलानि, आददानः गृह्णन्, त्वमेवमनेन प्रकारेण, सुकृतस्य पुण्यस्य, वपुषः शरीरस्य च, तुल्यकालं समकालम्, विवृद्धिं प्राप्स्यसि लप्स्यसे । तस्याः पुण्यजलानि आददानस्य ते पुण्यस्य शरीरस्य च वृद्धिर्भविष्यतीति भावः ।

**हिन्दी**—हे मेघ ! पापों का नाश करने वाली चर्मण्वती नदी पानी बरसा देने से हलके हुए और पक्षी के समान वेग से आक्रमण करने वाले तुमको अपने लहररूपी हाथों से बुलायेगी । उसका आदर करने के लिए भूतल पर उतर कर उसका जल ग्रहण करने से तुम्हारे पुण्य और शरीर दोनों की वृद्धि हो जायेगी । अर्थात् चर्मण्वती नदी के पवित्र जल का स्पर्श करने से तुम्हें पुण्य मिलेगा और उसके जल को ग्रहण करने से तुम्हारे शरीर की गुरुता बढ़ेगी ।

*English trans* : Oh cloud ! while you are flying over speedily like a bird the sacred river Charmanvati will call you who are emaciated by continuous showers. To honour it you get down on the earth and receive its water. Thus you will increase both your purity and form simultaneously.

दृष्ट्वा देवं पशुपतिरिति ख्यातिमाप्तं पृथिव्यां
गर्जन्नुच्चैर्हर हर महादेव इत्यप्रमत्तः।
पीतो दृग्भिर्दशपुरजनैरुन्नमय्याननानि
श्रद्धावेशात् प्रचल पुरतो रुद्धवागार्द्रनेत्रः ॥ ७२ ॥

**अन्वयः**—पृथिव्यां पशुपतिरिति ख्यातिमाप्तं देवं दृष्ट्वा अप्रमत्तः हर हर महादेव इत्युच्चैः गर्जन् दशपुरजनैः आननानि उन्नमय्य दृग्भिः पीतः श्रद्धावेशात् रुद्धवाक् आर्द्रनेत्रः ( सन् ) पुरतः प्रचल ।

**व्याख्या**—दृष्ट्वेति । पृथिव्यां जगति, पशुपतिरिति ख्यातिं प्रसिद्धिं, आप्तं प्राप्तं, पशुपतिनामधेयं, देवं, दृष्ट्वा साक्षात्कृत्य, अप्रमत्तः प्रमादरहितः सावधानः, 'हर हर महादेव' इति उच्चैः उच्चैःस्वरेण गर्जन्, दशपुरजनैः दशपुर-निवासिभिः जनैः, आननानि मुखानि, उन्नमय्य उत्क्षिप्य, दृग्भिः नेत्रैः, पीतः सादरं दृष्टः, प्रथमस्य प्रावृषेण्यस्य मेघस्य, सर्वेषामभीष्टत्वात्, श्रद्धावेशात् पशुपतेः दर्शनजन्येन भक्तिप्रकर्षेण, रुद्धा वाक् यस्य सः रुद्धकण्ठः, आर्द्रनेत्रः आर्द्रे नेत्रे यस्य सः, सात्त्विकभावेन क्लिन्ननेत्रः, पुरतः अग्रतः, प्रचल गच्छ ।

**हिन्दी**—दशपुर में जाकर पृथ्वी में पशुपति नाम से प्रसिद्ध भगवान् शिव का दर्शन करके अत्यन्त भक्तिभाव के कारण जोर से 'हर हर महादेव' ऐसी गर्जना करते हुए दशपुर के लोगों द्वारा अपना शिर ऊपर उठाकर जिसको अपनी आँखों से प्रेमपूर्वक देखा है, ऐसे तुम बड़ी श्रद्धा से गद्गद् कण्ठ होते हुए तथा भीगी हुई आँखों से वहाँ से आगे को प्रस्थान करना ।

*English trans* : In Dashapur, you visit the god who is famous in the world as Pashupati. Cry loudly 'Hara Hara Mahadeva' without failure. The people of Dhashapur will raise their heads and look at you with appreciation. Then you procced further with throat chocked and eyes moist with tears in devotion.

यायाद् गोपाचलमथ भवान् सर्वसम्पत्समृद्धं
सङ्गीतस्य प्रथितमवनौ स्थानमाद्यं कलायाः।
सङ्ख्यातीतैः परमनिपुणैर्गायनैः सङ्कुलं यद्
हाहाहूहूवसतिमसतीं स्वर्गभूमिं करोति ॥ ७३ ॥

**अन्वयः**—अथ भवान् अवनौ प्रथितं सङ्गीतस्य कलायाः आद्यं स्थानं सर्वसम्पत्समृद्धं गोपाचलं यायात्। सङ्ख्यातीतैः परमनिपुणैः गायनैः सङ्कुलं यत् हाहाहूहूवसतिं स्वर्गभूमिम् असतीं करोति।

**व्याख्या**—यायादिति। अथ अनन्तरम्, 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ' इत्यमरः। भवान् अवनौ पृथिव्याम्, प्रथितं प्रसिद्धम्, सङ्गीतस्य कलायाः, आद्यं प्रथमं स्थानम्, सर्वसम्पत्समृद्धं सर्वविधसम्पत्तिपूर्णम्, गोपाचलं नगरविशेषः, इदानीं 'ग्वालियर' इति नाम्ना ख्यातम्, यायात् गच्छेत्। सङ्ख्यां गणनामतीतैः अतिक्रान्तैः, असङ्ख्यैरित्यर्थः। 'द्वितीयाश्रितातीत' इति समासः। परमाश्च ते निपुणाः प्रवीणाः, 'सन्महदिति समासः। गायनैः गायकैः, गानकुशलैरित्यर्थः। 'ण्युट् च' इति गैधातोर्ण्युट्। सङ्कुलं व्याप्तम्, यद् गोपाचलम्, हाहाहूह्वौ गन्धर्वौ, तयोः वसतिं निवासस्थानम्, स्वर्गभूमिं स्वर्गलोकम्, असतीमप्रशस्ताम्, अनादरणीयामित्यर्थः करोति। 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः। 'हाहाहूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' इत्यमरः।

**हिन्दी**—उसके बाद पृथ्वी में संगीतकला का प्रमुख स्थान सभी प्रकार की सम्पत्तियों से समृद्ध गोपाचल ( ग्वालियर ) नगर की ओर तुम प्रस्थान करना। संगीतकला में अत्यन्त निपुण अगणित गायकों से भरा हुआ यह नगर हाहा, हूहू आदि गन्धर्वों के निवास-स्थान स्वर्गलोक को भी नीचा दिखलाने में समर्थ हैं।

*English trans* : Go to the most prosperous place Gopachal. It is the famous centre of the art of music in the world. It is crowded with innumerable musicians of a very high rank and so it excells the heaven which is the dwelling-place of the two celestial musicians Haha and Hoohoo.

गीतं तन्त्रीस्वनमनुगतं काकलीसन्निबद्धं
तालैर्युक्तं लयपरिचितं मूर्च्छनाजृम्भमाणम् ।
शृण्वन् रागैर्बहुभिरुदितं तत्र मल्लारमुख्यै-
र्नादब्रह्म प्रकटमखिलं मंस्यसे मूर्तरूपम् ।। ७४ ।।

**अन्वयः**—तत्र तन्त्रीस्वनम् अनुगतं काकलीसन्निबद्धं तालैः युक्तं लयपरिचितं मूर्च्छनाजृम्भमाणं मल्लारमुख्यैः बहुभिः रागैः उदितं गीतं शृण्वन् नादब्रह्म अखिलं मूर्तरूपं प्रकटं मंस्यसे ।

**व्याख्या**—गीतमिति । तत्र गोपाचलपुरे, तन्त्री वीणा तस्याः स्वनं स्वरमनुगतम्, काकल्या मधुरास्फुटेन कलेन सूक्ष्मेण ध्वनिना सन्निबद्धं युक्तम्, 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इत्यमरः । तालैः कालक्रियामानैः युक्तं सहितम्, लयेन साम्येन परिचितं लययुक्तम्, 'तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्' इत्यमरः । मूर्च्छनया स्वरारोहावरोहक्रमेण जृम्भमाणं विस्तृतम्, 'स्वराणां स्थापनाः सान्ता मूर्च्छनाः सप्त सप्त हि' इति सङ्गीतरत्नाकरे । मल्लारमुख्यैः मल्लारप्रभृतिभिः, बहुभिः अनेकैः रागैः, उदितं प्रस्तुतम्, गीतं गानम्, 'गीतं गानमुभे समे' इत्यमरः । शृण्वन् आकर्णयन्, त्वं नादब्रह्म नादरूपं ब्रह्म, अखिलं सम्पूर्णं, मूर्तरूपं मूर्तं रूपं यस्य तत्, प्रकटं प्रत्यक्षं, मंस्यसे भावयिष्यसि । 'भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मेघमल्लारो रागाः षडिति कीर्तिताः' । इति षड्रागाः सङ्गीतशास्त्रे प्रसिद्धाः ।

**हिन्दी**—वहाँ ( ग्वालियर में ) वीणा की ध्वनि के साथ गाया हुआ मधुर ध्वनि से युक्त ताल का अनुसरण करने वाला लय के अनुरूप वाला, स्वरों के आरोह-अवरोह क्रम से विस्तारित मल्लार आदि प्रमुख रागों द्वारा प्रस्तुत किये हुए गीत को सुनते हुए तुम सम्पूर्ण नादब्रह्म मूर्त रूप से प्रकट हुआ है, ऐसा अनुभव करोगे ।

*English trans* : There you will hear the songs sung in low and sweet tones, harmonious with the sound of lute, with due tal, laya and regulated rise and fall of sounds, presented in various ragas like Malhar etc. Then you will think that the supreme being in the form of sound embodied manifested there.

शैलं गोपाचलपरिसरात् पारियात्रं प्रयातः
प्रत्युद्यातः प्रमदभरितैः साश्रुनेत्रैर्मयूरैः।
तस्यातिथ्यं बहुलमचलस्यादरादाददानः
कालं कञ्चित् क्षपय कटके विश्रमं कर्तुकामः ।। ७५ ।।

**अन्वयः**—गोपाचलपरिसरात् पारियात्रं शैलं प्रयातः प्रमदभरितैः साश्रुनेत्रैः मयूरैः प्रत्युद्यातः ( त्वं ) तस्य अचलस्य बहुलम् आतिथ्यम् आददानः विश्रमं कर्तुकामः कटके कञ्चित् कालं क्षपय ।

**व्याख्या**—शैलमिति । गोपाचलस्य परिसरात् पर्यन्तदेशात्, 'पर्यन्तभूः परिसरः' इत्यमरः । पारियात्रं 'अरवली' इति प्रसिद्धं, शैलं कुलपर्वतम्, 'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ।' इति प्रसिद्धिः । प्रयातः प्राप्तः । प्रमदेन हर्षेण, भरितैः पूर्णैः, साश्रुनेत्रैः मेघ-दर्शनेन आनन्दसलिलपूर्णनयनैः, मयूरैः प्रत्युद्यातः प्रत्युद्गतः, त्वं तस्य अचलस्य पर्वतस्य, बहुलं प्रभूतम्, आतिथ्यमादरात्, आददानः स्वीकुर्वाणः, विश्रमं विश्रान्तिम्, कर्तुकामः अभिलषन्, तस्य कटके नितम्बदेशे, 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । कञ्चित्कालं क्षपय यापय ।

**हिन्दी**—ग्वालियर की सीमा को छोड़कर पारियात्र नामक कुलपर्वत की ओर जाते हुए आनन्दविभोर एवं अश्रुपूर्ण नेत्रों वाले मोरों ने जिसका स्वागत किया है, ऐसे तुम उस पर्वत द्वारा किये हुए पर्याप्त आतिथ्य को स्वीकार कर विश्राम करने की दृष्टि से उसके तटप्रदेश में अपना कुछ समय बिताना ।

*English trans* : From Gopachala you go the Pariyatra mountain. There the pea-cocks will be pleased to see you and will receive you with eyes full of tears. Accept the grand hospitality of that mountain and rest there for a while on its flanks.

तस्मिन् शैले प्रमदमुखरान् विस्फुरद्बर्हभारान्
मन्दं मन्दं विपिनशिखिनो गर्जितैर्नर्तयित्वा ।
दावक्लान्तं किमपि रमय क्ष्माभृतस्तस्य चित्तं
नह्यातिथ्यं प्रथमविहितं त्वादृशा विस्मरन्ति ।। ७६ ।।

**अन्वयः**—तस्मिन् शैले प्रमदमुखरान् विस्फुरद्बर्हभारान् विपिनशिखिनः गर्जितैः मन्दं मन्दं नर्तयित्वा तस्य क्ष्माभृतः दावक्लान्तं चित्तं किमपि रमय। हि त्वादृशाः प्रथमविहितम् आतिथ्यं न विस्मरन्ति ।

**व्याख्या**—तस्मिन्निति । तस्मिन् शैले पारियात्रे, प्रमदेन हर्षेण, मुखरान् वाचालान्, 'रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्' इति मुखशब्दात् रप्रत्ययः । 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः । विस्फुरन् प्रसारणेन शोभमानः बर्हभारः कलापः येषां तान्, विपिनशिखिनः वनमयूरान्, मन्दं मन्दं 'नित्य-वीप्सयोः' इति वीप्सायां द्विर्वचनम् । नर्तयित्वा नृत्यं कर्तुं सम्प्रेर्य, तस्य क्ष्माभृतः पर्वतस्य राज्ञश्च, दावेन ग्रीष्मजन्येन वनवह्निना, 'वने च वनवह्नौ च दवो दाव इहेष्यते' । इति शब्दार्णवः । क्लान्तं विषण्णम्, चित्तं मनः, किमपि किञ्चित्, रमय विनोदय । नृत्यदर्शनादिना दुःखापनोदः प्रसिद्धः । हि यस्मात्, त्वादृशाः त्वत्सदृशाः महान्तः, प्रथमविहितं पूर्वं कृतम्, आतिथ्यम् उपकारं, न विस्मरन्ति । प्रत्युपकारेण प्रतिनिर्यापयन्ति ।

**हिन्दी**—उस पर्वत पर आनन्द से मधुर शब्द करने वाले तथा अपने पंख जिन्होंने फैलाये हैं, ऐसे जंगली मयूरों को अपनी गर्जना द्वारा मन्द-मन्द नृत्य कराते हुए तुम उस पर्वतराज के गर्मी के दिनों में लगी हुई दावाग्नि से दुःखी मन को प्रसन्न करना, क्योंकि तुम्हारे जैसे कुलीन व्यक्ति पहले किये गये अतिथि-सत्कार रूपी उपकार को नहीं भूलते ।

*English trans* : On hearing your thunders the peacocks in the forests of that mountain will be pleased, make sweet sounds and dance slowly spreading their tails. Thus you remove the affliction caused by the forest-conflagration to that mountain and amuse him.

अध्यारूढाः कुटिलगमनानध्वनीनाः क्रमेलान्
नानावर्णान् शिरसि बृहतः पट्टकान् धारयन्तः ।
स्फूर्जत्कूर्चा निजकटितटे मण्डलाग्रान् दधाना
व्यूढोरस्कास्तव वितनुयुः कौतुकं राजपुत्राः ॥ ७७ ॥

**अन्वयः**—कुटिलगमनान् क्रमेलान् अध्यारूढाः, शिरसि नानावर्णान् बृहतः पट्टकान् धारयन्तः, स्फूर्जत्कूर्चाः कटितटे मण्डलाग्रान् दधानाः, व्यूढोरस्काः अध्वनीनाः राजपुत्राः तव कौतुकं वितनुयुः ।

**व्याख्या**—अध्यारूढा इति । कुटिलं वक्रं गमनं गतिर्येषां तान्, क्रमेलान् उष्ट्रान्, 'उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः' इत्यमरः । अध्यारूढाः उष्ट्रवाहना इत्यर्थः, मरुस्थले उष्ट्रस्यैव वाहनत्वेनोपयोगात् । शिरसि मस्तके, नानावर्णान् नीलपीतादिभिन्नभिन्नवर्णान्, बृहतः महतः, पट्टकान् उष्णीषान्, धारयन्तः बिभ्राणाः, स्फूर्जन् शोभमानः कूर्चः मुखस्थः केशकलापः येषां ते, निजकटितटे आत्मनः कटिप्रदेशे, मण्डलाग्रान् खड्गान्, दधानाः वहन्तः, 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः । व्यूढं विशालम् उरः वक्षःस्थलं येषां ते, अध्वनीनाः पथिकाः, 'अध्वनो यत्खौ' इति खप्रत्ययः । 'अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि' इत्यमरः । राजपुत्राः 'राजपूत' इति ख्याताः क्षत्रियविशेषाः, तव कौतुकं कौतूहलं, प्रमोदमित्यर्थः, वितनुयुः कुर्युः, करिष्यन्तीत्यर्थः ।

**हिन्दी**—वहाँ से चलकर मार्ग में वक्रगति से चलने वाले ऊँटों पर सवार हुए, शिर पर रंग-बिरंगी पगड़ियाँ बाँधे हुए, लम्बी दाढ़ी-मूछों वाले, कमर में तलवार लटकाये हुए तथा चौड़ी छाती वाले परदेश जाने वाले राजपूतों को देखकर तुम्हारे मन में कुतूहल होगा ।

*English trans* : You will be pleased to see the Rajputas with broad chests and beautiful beards wearing big turbans of various colours, having swords in their girdles, travelling on camels walking with crooked gaits.

कुक्षौ हस्ते शिरसि कलशान् लीलया सन्दधाना
आशीर्षादाचरणयुगलं भूषणैर्भूषिताङ्ग्यः ।
नार्यस्तोयानयननिरताः साभिलाषं भवन्तं
कृत्वा दूरं क्षणमिव मुखाद् वस्त्रमालोकयेयुः ॥ ७८ ॥

**अन्वयः**—कुक्षौ हस्ते शिरसि लीलया कलशान् सन्दधानाः, आशीर्षात् आचरणयुगलं भूषणैः भूषिताङ्ग्यः, तोयानयननिरताः नार्यः, मुखात् वस्त्रं क्षणम् इव दूरं कृत्वा भवन्तं साभिलाषम् आलोकयेयुः ।

**व्याख्या**—कुक्षाविति । कुक्षौ नितम्बप्रदेशे, हस्ते करे, शिरसि मस्तके, लीलया हेलया, कलशान् घटान्, सन्दधानाः धारयन्त्यः, आशीर्षात् आमस्तकात्, आचरणयुगलं पदद्वयपर्यन्तम्, भूषणैः अलङ्कारैः, भूषिताङ्ग्यः अलङ्कृताः, तोयानयने जलानयने, निरताः व्यापृताः, मुखात् वदनात्, वस्त्रम् अञ्चलम्, क्षणमिव दूरं कृत्वा, भवन्तं साभिलाषम् अभिलाषेण सहितं यथा स्यात्तथा, आलोकयेयुः पश्येयुः । जलाभिलाषिणीनां तासां जलपूर्णं मेघं प्रति साभिलाषमवलोकनं युज्यते ।

**हिन्दी**—कमर पर हाथ में और शिर पर स्वाभाविक रूप से भरे हुए कलशों को लेकर जाने वाली शिर से लेकर पैरों तक विविध आभूषणों से भूषित पानी भरकर लाने में तत्पर नारियाँ अपने मुख पर से एक क्षण के लिये घूँघट को हटाकर तुमको बड़े चाव से देखेंगी, क्योंकि मरुभूमि में पानी के अभाव का होना और तुम्हारा पानी बरसाने के लिए तत्पर रहना, ये दोनों बातें सुप्रसिद्ध हैं ।

*English trans* : The ladies engaged in fetching water, holding easily pitchers on their waists in hands and on heads, having ornaments from head to feet will remove the hem of the garment from their face for a moment and look at you affectionately.

वापी कूपः क्वचिदिह मरौ, दुर्लभो वा तडागः
क्रोशात् क्रोशं विचरति जनो जीवनं लिप्समानः ।
दैवात् कूपो यदि तदुदकं दूरमल्पप्रमाणं
तस्मिन् वृष्टिं तव विदधतः सम्भवेत् पुण्यलाभः ॥ ७९ ॥

**अन्वयः**—इह मरौ क्वचित् वापी कूपः (अस्ति)। तडागो वा दुर्लभः जीवनं लिप्समानः जनः क्रोशात् क्रोशं विचरति । यदि दैवात् कूपः तदुदकं दूरम् अल्पप्रमाणं, तस्मिन् वृष्टिं विदधतः तव पुण्यलाभः सम्भवेत् ।

**व्याख्या**—वापीति । इह मरौ धन्वनि, 'समानौ मरुधन्वानौ' इत्यमरः । वापी दीर्घिका, 'वापी तु दीर्घिका' इत्यमरः । कूपः अन्धुः, 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरः । क्वचिदस्ति । तडागः कासारः, 'पद्माकर-स्तडागोऽस्त्री कासारः सरसी सरः, इत्यमरः । दुर्लभः दुःखेन लब्धुं शक्यः, जीवनं जलम्, लिप्समानः लब्धुमिच्छन्, जनः क्रोशात् क्रोशम्, विचरति भ्रमति । यदि दैवात् कूपो लभ्यते तर्हि तस्य उदकं जलं, दूरं निम्नम्, अल्पं प्रमाणं यस्य तत्, तस्मिन् वृष्टिं वर्षं, विदधतः कुर्वतः, तव पुण्यस्य लाभः सम्भवेत् ।

**हिन्दी**—इस मारवाड़ प्रदेश में बावड़ी, कुएँ बहुत कम होते हैं । तालाबों का तो मिलना ही कठिन है । जल के इच्छुक लोगों को कोसों दूर चलना पड़ता है । यदि भाग्य से कहीं कुआँ मिल भी जाय तो उसका पानी बहुत गहरायी में और वह भी बहुत थोड़ा होता है । इसलिए वहाँ वृष्टि करने से तुमको निश्चय ही पुण्य की प्राप्ति होगी ।

*English trans :* In this desert a well or reservior of water is very rare. A tank can hardly he found. People have to wander for miles in search of water. If by chance any well is found it's water is very deep and little. If you will shower there it will be creditable for you.

स्वैरं मार्गे व्रज नवनवं कौतुकं वीक्षमाण-
श्छायादानात् किमपि जनयन्नध्वगानां प्रमोदम् ।
एवं मेघाध्वनि विचरतः प्राप्नुयान्नेत्रदेशं
क्षेत्रं दूरादसुकृतजुषां दुष्करं पुष्करं ते ॥ ८० ॥

**अन्वयः**—हे मेघ ! छायादानात् अध्वगानां किमपि प्रमोदं जनयन् नवनवं कौतुकं वीक्षमाणः स्वैरं व्रज । एवम् अध्वनि विचरतः ते असुकृतजुषां दुष्करं पुष्करं क्षेत्रं दूरात् नेत्रदेशं प्राप्नुयात् ।

**व्याख्या**—स्वैरमिति । हे मेघ ! मार्गे छाया अनातपः आतपनिवारण-मित्यर्थः । तस्याः दानात्, 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्य-मरः । अध्वगानां पथिकानाम्, किमपि अनिर्वचनीयम्, प्रमोदं हर्षम्, जनयन् कुर्वन्, नवनवं कौतुकं कौतूहलम्, वीक्षमाणः पश्यन्, स्वैरं स्वच्छन्दम्, व्रज गच्छ । 'मन्दस्वच्छन्दयोः स्वैरः' इत्यमरः । एवम् अध्वनि मार्गे, आकाशे इत्यर्थः । विचरतः गच्छतः, ते तव, असुकृतजुषाम् अपुण्यकृताम्, दुष्करं दुर्लभम्, पुष्करं क्षेत्रम्, नेत्रदेशं दृष्टिपथम्, प्राप्नुयात् प्राप्स्यति ।

**हिन्दी**—हे मेघ ! छाया करने से पथिकों को आनन्द देते हुए नये-नये कौतुकों को देखते हुए तुम स्वच्छन्द गति से आगे की ओर जाना । इस प्रकार रास्ते में विचरण करते हुए पापियों के लिए दुर्लभ पुष्कर-क्षेत्र दूर से तुम्हें दिखलायी देगा ।

*English trans* : Oh cloud ! proceed freely on your way observing new curious things. Give pleasure to the travellers causing shade over them. Thus going on your way you will see at a distance that sacred place called Pushkarw hich is difficult to approach for impious persons.

सर्गक्लेशप्रशिथिलवपुःसन्धिबन्धः प्रवृद्ध-
स्तत्राऽऽवासं कलयति चिरं पद्मयोनिः सदारः ।
पूत्वाऽऽत्मानं त्वमपि सरसिच्छायया सम्प्रविष्टः
स्रष्टारं तं प्रणम जगतां कुम्भकारं पुराणम् ॥ ८१ ॥

**अन्वयः**—सर्गक्लेशप्रशिथिलवपुःसन्धिबन्धः प्रवृद्धः सदारः पद्मयोनिः तत्र चिरम् आवासं कलयति । त्वमपि सरसिच्छायया सम्प्रविष्टः आत्मानं पूत्वा जगतां स्रष्टारं तं पुराणं कुम्भकारं प्रणम ।

**व्याख्या**—सर्गेति । सर्गस्य सृष्टिनिर्माणस्य क्लेशः परिश्रमः तेन प्रशिथिलः स्रस्तः वपुःसन्धीनां शरीरसन्धीनां बन्धः यस्य सः, प्रवृद्धः प्रकर्षेण वृद्धः स्थविरः, सदारः दारैः पत्न्या सहितः, पद्मयोनिः ब्रह्मा, तत्र पुष्करक्षेत्रे, चिरं चिरकालम्, आवासं निवासम्, कलयति करोति । त्वमपि छायया प्रतिबिम्बेन, सरसि पुष्कराख्ये सरोवरे सम्प्रविष्टः, आत्मानं पूत्वा पवित्रं कृत्वा, देवदर्शनार्थं स्नानादिना शुचित्वमपेक्षितम्, जगतां स्रष्टारं प्रणेतारम्, तं पुराणं पुरातनम्, कुम्भकारं कुलालम्, प्रणम वन्दस्व । तथा चोक्तम् भर्तृहरिणा–'ब्रह्मा येन कुलाल-यन्नियमितो ब्रह्माण्डभाण्डोदरे' इति । श्रुतिश्च—'नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः' इति ।

**हिन्दी**—सृष्टि-निर्माण के परिश्रम से जिनके शरीर के जोड़-जोड़ ढीले पड़ गये हैं, ऐसे अतिवृद्ध ब्रह्माजी अपनी पत्नी के साथ उस पुष्कर-क्षेत्र में बहुत समय से निवास करते हैं । तुम भी अपने प्रतिबिम्ब से पुष्कर सरोवर में प्रवेश करके स्वयं पवित्र होकर संसार की उत्पत्ति करनेवाले उस पुरातन कुम्भकार ( ब्रह्माजी ) को प्रणाम करना ।

*English trans* **:** Advanced in age, tired by the exertion caused by the creation of the universe lord Brahma resides there with his wife. You immerse in the Pushkar lake in the form of your shadow, purify yourself and bow down before the creator of the universe the ancient potter.

उत्पुच्छाग्राः पथि विदधतो वप्रकेलिं महोक्षा-
श्चित्रा गावो वनभुवि सुखं सञ्चरन्त्यो घटोघ्न्यः ।
पीनस्कन्धाः पुरुषवृषभा मल्लयुद्धप्रसक्ताः
स्थाने स्थाने मनसि कुतुकं शूरसेनेषु दध्युः ॥ ८२ ॥

**अन्वयः**—शूरसेनेषु पथि स्थाने स्थाने वप्रकेलिं विदधतः उत्पुच्छाग्राः महोक्षाः, वनभुवि सुखं सञ्चरन्त्यः घटोघ्न्यः चित्राः गावः, पीनस्कन्धाः मल्लयुद्धप्रसक्ताः पुरुषवृषभाः तव मनसि कुतुकं दध्युः ।

**व्याख्या**—उत्पुच्छाग्रा इति । शूरसेनेषु शूरसेनदेशे, पथि स्थाने स्थाने, वीप्सायां द्विर्वचनम् । वप्रकेलिं वप्रक्रीडाम्, 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इति शब्दार्णवः । विदधतः कुर्वाणाः उद्गतं पुच्छाग्रं येषां ते, महोक्षाः महान्तः उक्षाणः 'उक्षा महान् महोक्षः स्यात्' इत्यमरः । वनभुवि वनप्रदेशे, सुखं सञ्चरन्त्यः विहरन्त्यः, घट इव ऊधः आपीनं यासां ताः, 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'बहुव्रीहेरूधसो ङीष्' इति ङीष् । 'ऊधसोऽनङ्' इत्यनङादेशः । चित्राः नानावर्णाः, गावः धेनवः, पीनः पीवरः स्कन्धः अंसः येषां ते, मल्लयुद्धे प्रसक्ताः तत्पराः, पुरुषवृषभाः पुरुषश्रेष्ठाः, 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' ॥ इत्यमरः । तव मनसि हृदये कुतुकं प्रसादं दध्युः कुर्युः, करिष्यन्तीति भावः ।

**हिन्दी**—शूरसेन देश से आगे जाते समय मार्ग में स्थान-स्थान पर अपने सींगों द्वारा उत्खात-क्रीड़ा करनेवाले पूँछों को उठाये हुए साँड, वन में सुख से विचरती हुई जिनकी एन या औड़ी दूध से भरी हों ऐसी रंग-बिरंगी गायें तथा मोटे कन्धों वाले कुश्ती करने में मस्त बलिष्ठ पुरुष तुम्हारे मन में कौतुक उत्पन्न करेंगे ।

*English trans* : On your way in Shoorsen country you will frequently come across the large bulls with tails uplifted playfully butting the monds, cows of different colours with full udders grazing happily in the fields, stout and broad shouldered men engaged in wrestling. You shall be delighted to view them.

कृत्स्नक्षोणीवलयतिलकश्रीहरां सम्पदाढ्यां
द्रष्टासि त्वं जलद ! मथुरां राजधानीं यदूनाम् ।
उच्चैर्यस्या वलभिशिखरैः सन्निरुद्धेऽन्तरिक्षे
भूयोभूयः स्खलति नियतं व्योमयानं सुराणाम् ॥ ८३ ॥

**अन्वयः**—हे जलद ! त्वं कृत्स्नक्षोणीवलयतिलकश्रीहरां सम्पदाढ्यां यदूनां राजधानीं मथुरां द्रष्टासि । यस्याः उच्चैः वलभिशिखरैः सन्निरुद्धे अन्तरिक्षे सुराणां व्योमयानं भूयोभूयः स्खलति ।

**व्याख्या**—कृत्स्नेति । कृत्स्नं समस्तं क्षोणीवलयं भूमण्डलम्, 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्' इत्यमरः । 'क्षोणिर्ज्या काश्यपी क्षितिः' इति चामरः । तस्य तिलकं विशेषकम्, 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । तस्य श्रीः शोभा तां हरतीति तथा, पृथ्वीमण्डलं भूषयन्तीमित्यर्थः । सम्पदा श्रिया आढ्यां सम्पन्नाम्, यदूनां यादवानाम्, राजधानीं प्रधाननगरीम्, मथुरां द्रष्टासि द्रक्ष्यसि, अनद्यतने भविष्यति लुट् । यस्याः उच्चैः उन्नतैः, वलभिशिखरैः चन्द्रशालाग्रभागैः, सन्निरुद्धे आवृते, अन्तरिक्षे आकाशे, सुराणां देवानाम्, व्योमयानं विमानम्, 'व्योमयानं विमानोऽस्त्री' इत्यमरः । नियतं नियमेन, भूयोभूयः पुनःपुनः, स्खलति निरुध्यते ।

**हिन्दी**—हे मेघ ! इसके आगे तुम सम्पूर्ण भूमण्डल के तिलक के समान शोभा को धारण करनेवाली सर्वविध सम्पत्ति से पूर्ण यादवों की राजधानी मथुरा को देखोगे । जिस नगरी में स्थित चन्द्रशालाओं की ऊँची चोटियों से ढके हुए आकाश में देवताओं के विमान बार-बार रुक जाते हैं ।

*English trans* : Oh cloud ! then you visit the rich city Mathura, capital of the Yadavas and an ornament of the entire earth. The lofty tops of it's upper rooms cover the sky and obstruct the aeroplanes of the gods.

मज्जन्तीनां तरणिदुहितुर्वीचिलोले प्रवाहे
पौरस्त्रीणां कुचपरिसरे बिन्दुजालं जलस्य ।
हारैर्मुक्ताफलविरचितैरञ्चिते संविधत्ते
भ्रान्तिं यस्यां सपदि महतामिन्द्रनीलोपलानाम् ॥ ८४ ॥

**अन्वयः**—यस्यां तरणिदुहितुः वीचिलोले प्रवाहे मज्जन्तीनां पौरस्त्रीणां मुक्ताफलविरचितैः हारैः अञ्चिते कुचपरिसरे जलस्य बिन्दुजालं सपदि महताम् इन्द्रनीलोपलानां भ्रान्तिं संविधत्ते ।

**व्याख्या**—मज्जन्तीनामिति । यस्यां मथुरायाम्, तरणिदुहितुः तरणेः सूर्यस्य दुहितुः कन्यायाः यमुनायाः, वीचिभिः तरङ्गैः, लोले चञ्चले, प्रवाहे मज्जन्तीनां स्नान्तीनाम्, 'आच्छीनद्योर्नुम्' इति विकल्पेन नुम् । पौरस्त्रीणां नगराङ्गनानाम्, मुक्ताफलैः मौक्तिकैः, निर्मितैः रचितैः, हारैः अञ्चिते भूषिते, कुचपरिसरे स्तनतटे, जलस्य बिन्दुजालम्, सपदि तत्क्षणे, महतां स्थूलानाम्, इन्द्रनीलोपलानाम् इन्द्रनीलमणीनाम्, भ्रान्तिं भ्रमम्, संविधत्ते कुरुते । कालिन्दी-जलस्य नीलवर्णत्वेन तद्बिन्दूनामिन्द्रनीलमणिसादृश्यं सम्भवति ।

**हिन्दी**—उस मथुरा नगरी में सूर्यकन्या ( यमुना ) की जललहरों से चञ्चल प्रवाह में स्नान करती हुई नगर की स्त्रियों के मुक्ताहारों से सुशोभित स्तन-मण्डल से उछलती हुई पानी की बूँदें तत्काल ही बड़े-बड़े इन्द्रनीलमणियों का भ्रम उत्पन्न करती है ।

*English trans* : There in Mathura the drops of water settled on the breasts adorned by pearl-necklaces of the ladies of the town, bathing in the wavy current of the river Yamuna ( daughter of the Sun ) give rise to a misapprehension of big sapphires.

तस्यां मार्गभ्रमणसमये वर्ततां सावधानो
माभून्मेघ ! क्षणमपि भवान् विस्खलच्चित्तवृत्तिः ।
कृष्णस्याऽस्यां चिरनिवसतौ संवसन्तो नगर्यां
प्रायस्तस्याऽनुकरणपराश्चौर्यविद्यां भजन्ति ॥ ८५ ॥

**अन्वयः**—हे मेघ ! तस्यां मार्गभ्रमणसमये सावधानो वर्तताम् । भवान् क्षणमपि विस्खलच्चित्तवृत्तिः मा भूत् । कृष्णस्य चिरनिवसतौ अस्यां नगर्यां संवसन्तः तस्य अनुकरणपराः प्रायः चौर्यविद्यां भजन्ति ।

**व्याख्या**—तस्यामिति । हे मेघ ! तस्यां मथुरानगर्याम् । मार्गभ्रमणसमये नगरदर्शनार्थं परिभ्रमन्, भवान् सावधानः अप्रमत्तः, वर्ततां भवतु, भवान् क्षणमपि स्वल्पकालमपि, विस्खलन्ती अनवहिता चित्तवृत्तिः यस्य सः, मा भूत्, न भवतु, 'माङि लुङ्' कृष्णस्य चिरनिवसतौ दीर्घकालिके अस्मिन् निवासस्थाने, अस्यां नगर्यां पुर्याम्, संवसन्तः निवासिनः, तस्य कृष्णस्य, अनुकरणपराः प्रायः बाहुल्येन, चौर्यविद्यां भजन्ति, चौराः भवन्ति । तथा चोक्तम्—'बालोऽपि चौरः स्थविरोऽपि चौरः समागतः प्राघुणिकोऽपि चौरः । दिल्लीप्रदेशे मथुराप्रदेशे चौरं विना न प्रसवन्ति नार्यः' ॥ इति ।

**हिन्दी**— हे मेघ ! उस ( मथुरा ) में मार्ग पर भ्रमण करते समय तुम बड़े सावधान रहना, थोड़े समय के लिए भी तुम अपने मन को असावधान न होने देना, क्योंकि वहाँ कृष्ण भगवान् के बहुत समय तक रहने के कारण इस मथुरा नगरी में रहनेवाले प्रायः सभी कृष्ण का अनुकरण कर चौर्य-विद्या में निपुण होते हैं ।

*English trans* : Oh cloud ! there, while loitering on the streets be very careful. Don't be negligent even for a moment. It had been a residence of lord Krishna for a long time, so the people living there imitate him and are proficient in the art of stealing.

स्थानं वृन्दावनमथ पुनर्गोकुलं सन्निकृष्टं
कृष्णस्य त्वं व्रज भगवतः शैशवस्याऽधिवासम् ।
शृण्वन् वृद्धैरसकृदुदितांस्तत्र तत्तत्प्रसङ्गान्
साक्षात्कुर्यास्त्वमपि मनसा बाललीलां तदीयाम् ॥ ८६ ॥

**अन्वयः**—अथ पुनः त्वं भगवतः कृष्णस्य शैशवस्य अधिवासं सन्निकृष्टं स्थानं गोकुलं वृन्दावनं च व्रज । तत्र वृद्धैः असकृत् उदितान् तत्तत्प्रसङ्गान् शृण्वन् त्वमपि मनसा तदीयां बाललीलां साक्षात्कुर्याः ।

**व्याख्या**—अथ त्वं पुनः निश्चयेन, 'स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः,' इत्यमरः । भगवतः कृष्णस्य शैशवस्य बाल्यस्य, 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः । अधिवासं निवासम्, सन्निकृष्टं समीपस्थं स्थानं गोकुलं वृन्दावनं च व्रज प्रयाहि । तत्र वृद्धैः असकृत् पुनः पुनः, 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्-समाः' इत्यमरः । उदितान् उक्तान्, तत्तत्प्रसङ्गान् पूतनावधकालियमर्दनादीन्, शृण्वन् आकर्णयन्, त्वमपि तदीयां कृष्णसम्बन्धिनीम्, बाललीलां मनसा साक्षात्कुर्याः प्रत्यक्षां कुरु । 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः ।

**हिन्दी**—इसके बाद तुम भगवान् कृष्ण की बचपन की निवासभूमि गोकुल और वृन्दावन की ओर जाना । वहाँ वृद्ध पुरुषों द्वारा बार-बार कहे गये कृष्ण-चरित्र के पूतना-वध आदि प्रसंगों को सुनते हुए तुम भी अपने तन-मन से उनकी बाल-लीलाओं का साक्षात्कार करना ।

*English trans* : Then you visit the adjecent places Gokul and Vrindavana, residence of lord Krishna in his child-hood. There you will hear the stories of lord Krishna repeatedly told by the elderly persons. Hearing them you will perceive in your mind his juvenile sports.

सोऽयं वंशीवट इह तरोरस्य तिष्ठन्नधस्ता-
न्मन्दं मन्दं व्रजपतिसुतो वादयामास वेणुम् ।
रासक्रीडास्थलमिदमितोऽप्येष वृक्षः कदम्बः
सोऽयं गोवर्धन इति समाचक्षते यत्र वृद्धाः ॥ ८७ ॥

**अन्वयः**—यत्र सः अयं वंशीवटः, इह अस्य तरोः अधस्तात् तिष्ठन् व्रजपतिसुतः मन्दं मन्दं वेणुं वादयामास । इदं रासक्रीडास्थलम् इतः अपि एषः कदम्बः वृक्षः, सः अयं गोवर्धनः इति वृद्धाः समाचक्षते ।

**व्याख्या**—सोऽयमिति । यत्र गोकुले वृन्दावने च सोऽयमिति प्रत्यक्षतो निर्दिश्यमानः वंशीवटः अस्तीति शेषः, इह अत्र, अस्य तरोः वृक्षस्य, अधस्तात् अधोदेशे, तिष्ठन् व्रजपतेः नन्दस्य सुतः पुत्रः कृष्णः, मन्दं मन्दं वेणुं वादयामास वेणुध्वनिमकार्षीत् । इदं रासक्रीडायाः स्थलं स्थानमस्तीति शेषः । इतोऽपि अत्रापि, एष कदम्बः वृक्षः, सः अयं गोवर्धनः पर्वतः, इति वृद्धाः तत्रत्याः वृद्धजनाः, समाचक्षते कथयन्ति ।

**हिन्दी**—जहाँ के वृद्धजन इस प्रकार कृष्ण-लीलाओं की विविध चर्चाएँ किया करते हैं, यह वही वंशीवट है । इस पेड़ के नीचे खड़े होकर नन्दनन्दन श्रीकृष्णचन्द्र ने धीरे-धीरे वंशीवादन किया था । यह रासक्रीड़ा का स्थान है । यहाँ एक सुप्रसिद्ध कदम्ब वृक्ष है ( जहाँ पर श्रीकृष्ण ने गोपियों का चीर-हरण किया था ) । यह वही गोवर्धन पर्वत है ( जिसे अपनी अंगुली पर उठाकर श्रीकृष्ण ने व्रजवासियों की रक्षा की थी ) ।

*English trans* : This is the Vanshi-vata, here standing under this tree lord Krishna the son of Nanda ( chief of the cow-herds ) gently played his flute. This is the place of Rasa-Krida, this is the Kadamba tree, this is the Govardhan mountain, thus the elderly persons there show the particular places.

इन्द्रप्रस्थं स्थितमधितटं चण्डभानोः सुताया
यात्वा पश्येरिह मयसभां पाण्डवानां प्रसिद्धाम् ।
अत्यासन्नं तदपि नगरं हस्तिनाख्यं समेत्य
द्यूतक्रीडास्थलमपि सखे नेत्रपात्रं कुरुष्व ।। ८८ ।।

**अन्वयः**—हे सखे ! चण्डभानोः सुतायाः अधितटं स्थितम् इन्द्रप्रस्थं यात्वा इह पाण्डवानां प्रसिद्धां मयसभां पश्येः । अत्यासन्नं तदपि हस्तिनाख्यं नगरं समेत्य द्यूतक्रीडास्थलमपि नेत्रपात्रं कुरुष्व ।

**व्याख्या**—इन्द्रप्रस्थमिति । हे सखे ! चण्डभानोः सूर्यस्य सुतायाः कन्यायाः यमुनायाः अधितटं तटप्रदेशे, विभक्त्यर्थे अव्ययीभावः, स्थितम् इन्द्रप्रस्थं पाण्डवानां राजधानीम्, यात्वा गत्वा, प्रसिद्धां मयसभां मयेन शिल्पकुशलेन दानवेन निर्मितां विचित्रां सभां, पश्येः अवलोकय । अत्यासन्नम् अतिनिकटं, तदपि प्रसिद्धं हस्तिनाख्यं नगरं हस्तिनापुरं, समेत्य प्राप्य, द्यूतक्रीडायाः महाभारते प्रसिद्धायाः, स्थलमपि स्थानमपि, नेत्रयोः दृशोः, पात्रं विषयम्, कुरुष्व विधेहि ।

**हिन्दी**—हे मित्र ! तुम सूर्यकन्या ( यमुना ) के तट-प्रदेश में स्थित पाण्डवों की राजधानी इन्द्रप्रस्थ में जाकर वहाँ सुप्रसिद्ध शिल्पकला-कुशल मयदानव द्वारा रचित पाण्डवों के सभागृह को देखना । उसके अत्यन्त समीप स्थित हस्तिनापुर पहुँचकर जहाँ कौरव-पाण्डवों ने द्यूतक्रीड़ा की थी, उस स्थान के दर्शन भी अवश्य कर लेना ।

*English trans* **:** Then go to Indraprastha which is situated on the bank of the river Yamuna ( daughter of the sun ) and visit the splendid hall constructed by Maya for the Pandavas. Approach the adjecent Hastinapur and see the gambling place also.

सर्पन्नग्रे विरचय कुरुक्षेत्रमप्यक्षिपात्रं
युद्धं यस्मिन् समजनि महाभारतं ख्यातवृत्तम् ।
यत्रान्योन्यं प्रहरति बलादायुधैर्वीरवृन्दे
जज्ञे प्रावृट्समयसदृशी भूरिकीलालवृष्टिः ॥ ८९ ॥

**अन्वयः**—अग्रे सर्पन् कुरुक्षेत्रम् अपि अक्षिपात्रं विरचय । यस्मिन् ख्यात-वृत्तं महाभारतं युद्धं समजनि । यत्र वीरवृन्दे बलात् अन्योन्यं प्रहरति प्रावृट्-समयसदृशी भूरिकीलालवृष्टिः जज्ञे ।

**व्याख्या**—सर्पन्निति । अग्रे पुरः, सर्पन् गच्छन्, कुरुक्षेत्रमपि अक्षिपात्रं विरचय पश्य, यस्मिन् कुरुक्षेत्रे, ख्यातं वृत्तं यस्य तत् प्रसिद्धमित्यर्थः । महा-भारतं युद्धं समजनि अभवत् । अत्र युद्धे, वीराणां योधानां, वृन्दे समूहे, अन्योन्यं परस्परम्, प्रहरति सति, प्रावृट्समयसदृशी वर्षाकालतुल्या, भूरि बहुला, कीला-लस्य जलस्य रक्तस्य वा, वर्षाकालपक्षे जलस्य, युद्धपक्षे रुधिरस्य वृष्टिः, जज्ञे जाता, 'शोणितेऽम्भसि कीलालम्' इत्यमरः ।

**हिन्दी**—आगे जाते हुए कुरुक्षेत्र-प्रदेश को भी अवश्य देख लेना । जहाँ सुप्रसिद्ध महाभारत नामक ( कौरव-पाण्डवों का ) युद्ध हुआ था । जिस युद्ध में महान् बलशाली वीरों द्वारा एक-दूसरे को मारने पर वर्षा ऋतु जैसी पर्याप्त जल ( या रक्त ) की वर्षा हुई थी ।

*English trans* **:** From there proceed further and visit Kuru-kshetra where the famous Mahabharata war took place. In that war when the warriors assulted one another with their weapons there were excessive showers of blood ( or water ) as in the raing season.

वासं सारस्वततटजुषां याज्ञिकानां द्विजानां
देशं प्राप्तः प्रसृतमुभयोरन्तरे पुण्यनद्योः ।
धूमैर्वृद्धं वपुरभिवहन् हव्यगन्धानुविद्धैः
काश्मीरांस्त्वं जलधर ! पुरो द्रक्ष्यसि प्राप्तरूपान् ॥ ९० ॥

**॥ इति परममाहेश्वरेण शेवडेकुलसम्भवेन वसन्तमहाकविना विरचितेऽभिनवमेघदूतकाव्ये पूर्वमेघः समाप्तः ॥**

---

**अन्वयः**—हे जलधर ! उभयोः पुण्यनद्योः अन्तरे प्रसृतं सारस्वततटजुषां याज्ञिकानां द्विजानां वासं देशं प्राप्तः त्वं हव्यगन्धानुविद्धैः धूमैः वृद्धं वपुः अभिवहन् पुरः प्राप्तरूपान् काश्मीरान् द्रक्ष्यसि ।

**व्याख्या**—वासमिति । हे जलधर ! मेघ ! उभयोः पुण्यनद्योः सरस्वतीदृषद्वत्योः, अन्तरे मध्यभागे प्रसृतम्, सारस्वतं सरस्वत्या इदं सारस्वतं तटं तीरं जुषन्ते सेवन्ते इति तादृशानां सारस्वतानामित्यर्थः । याज्ञिकानां यज्ञकर्मतत्पराणाम्, द्विजानां ब्राह्मणानाम्, वासं निवासम्, देशं ब्रह्मावर्तम्, प्राप्तः । 'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते' ॥ इति मनुः । हव्यानां हविर्द्रव्याणां गन्धेन अनुविद्धैः युक्तैः, धूमैः वृद्धं वृद्धिमुपगतम्, वपुः शरीरम्, अभिवहन् धारयन्, मेघशरीरस्य धूमसलिलादिघटितत्वं 'धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः' इति प्रसिद्धम् । पुरः अग्रे, प्राप्तरूपान् मनोज्ञान्, 'प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः' इत्यमरः । काश्मीरान् प्रसिद्धान् देशविशेषान्, द्रक्ष्यसि अवलोकयिष्यसि ।

**हिन्दी**—हे मेघ ! दोनों ( सरस्वती और दृषद्वती ) नदियों के बीच में फैले हुए याज्ञिक सारस्वत ब्राह्मणों के निवासस्थान में पहुँचकर तुम हवन के लिए प्रयुक्त होनेवाले ( घृत आदि ) द्रव्यों की गन्ध द्वारा सुवासित धुँए से पुष्ट शरीर वाले होकर पुनः मनोरम काश्मीर देश का दर्शन करोगे ।

*English trans* : Oh cloud ! approach the country situated between the two holy rivers ( Saraswati and Drushadvati ) which is the abode of the Saraswat brahmins engaged in sacrifices. With your form increased by the smokes full of sweet smell of ablations you shall have before your view the beautiful region of Kashmir.

# उत्तरमेघः

राजन्वन्तः सकलभुवनाभोगभूषायमाणाः
स्वर्गस्थानामपि विहरतां नन्दने वाञ्छनीयाः ।
सर्वोत्कर्षप्रथमनिलयाः सर्वसौन्दर्यसीमाः
काश्मीरास्ते विदधतु सुधासेककल्पं प्रमोदम् ॥ १ ॥

**अन्वयः**—राजन्वन्तः सकलभुवनाभोगभूषायमाणाः नन्दने विहरतां स्वर्गस्थानामपि वाञ्छनीयाः सर्वोत्कर्षप्रथमनिलयाः सर्वसौन्दर्यसीमाः काश्मीराः ते सुधासेककल्पं प्रमोदं विदधतु ।

**व्याख्या**—राजन्वन्त इति । राजन्वन्तः सौराज्यवन्तः, 'राजन्वान् सौराज्ये' इति निपातितः । भुवनस्य जगतः आभोगः विस्तारः, सकलस्य भुवनाभोगस्य भूषायमाणाः भूषणमिवाचरन्तः, नन्दने नन्दनवने, विहरतां विहारं कुर्वताम्, स्वर्गस्थानामपि देवानामपि, वाञ्छनीयाः निवासार्थमभिलषणीयाः, सर्वेषाम् उत्कर्षाणाम् इष्टवस्तूनां प्रथमनिलयाः आद्यनिवासाः, सर्वेषां सौन्दर्याणां सीमाः चरममर्यादाः, यदपेक्षया कस्मिन्नपि विषये अन्यत्र सौन्दर्याधिक्यं नास्तीति भावः, काश्मीराः ते तव सुधायाः अमृतस्य सेकः सेचनं तत्तुल्यं प्रमोदं हर्षं विदधतु कुर्वन्तु ।

**हिन्दी**—अच्छे राजा के शासन में होनेवाला सम्पूर्ण भूमण्डल के विस्तार का भूषण, नन्दनवन में विहार करने वाले देवता भी जहाँ निवास करने की इच्छा करते हैं, इस प्रकार का सभी अभीप्सित वस्तुओं का प्रथम निवासस्थान, सभी सुन्दर पदार्थों की चरम सीमा वाला काश्मीर देश तुम्हें अमृत-सिंचन के समान असीम आनन्द प्रदान करेगा ।

*English trans* : The Kashmir region is well governed. It is like an ornament of the whole universe. Even the gods sporting in the celestial garden long to come and reside there. It is an abode of all excellent things. It's view will please you like the sprinkling of nectar.

अस्ति स्थानं प्रवरनगरं तत्र राज्ञां प्रधानं
मानं लक्ष्म्या नगररचनाशिल्पशास्त्रोपमानम् ।
प्राकाराग्रं दृढतरशिलासन्निबद्धं यदीयं
स्प्रष्टुं वाञ्छत्युपरिवलितैर्वीचिहस्तैर्वितस्ता ॥ २ ॥

**अन्वयः**—तत्र लक्ष्म्याः मानं, नगररचनाशिल्पशास्त्रोपमानं प्रवरनगरं राज्ञां प्रधानं स्थानम् अस्ति । वितस्ता उपरिवलितैः वीचिहस्तैः यदीयं दृढतर-शिलासन्निबद्धं प्राकाराग्रं स्प्रष्टुं वाञ्छति ।

**व्याख्या**—अस्तीति । तत्र काश्मीरेषु, लक्ष्म्याः श्रियः, मानं प्रमाणम्, प्रवर-नगरतुलनयैव अन्यनगराणां लक्ष्म्याः तुलना भवतीति भावः । यथा तन्नगरं प्रवरनगरतुल्यं धनाढ्यं, प्रवरनगरापेक्षया न्यूनधनमिति वा, नगरस्य रचना निर्मितिः तस्याः शिल्पशास्त्रं वास्तुनिर्माणशास्त्रं तस्य उपमानम् आदर्शभूतम्, प्रवरनगरस्य रचनां दृष्ट्वा अन्येषां नगराणां रचना क्रियत इति भावः । राज्ञां प्रधानं स्थानं राजधानी अस्ति । 'प्रधाननगरी राज्ञां राजधानीति कथ्यते' इति शब्दार्णवः । वितस्ता तत्रत्या वेदप्रसिद्धा पुण्यनदी, उपरिवलितैः उद्धृतैः वीचयो हस्ता इव तैः, यदीयं प्रवरनगरस्य सम्बन्धि, दृढतराः सुदृढाः शिलाः पाषाणाः ताभिः सन्निबद्धम्, प्राकारस्य नगरं परितः वर्तमानस्य तटस्य, 'प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः' इत्यमरः । अग्रम् अग्रभागम्, स्प्रष्टुं वाञ्छति इच्छतीत्युत्प्रेक्षा ।

**हिन्दी**—उस काश्मीर देश की लक्ष्मी की तुलना करने का प्रमाण, नगर-रचना के शिल्पशास्त्र के उदाहरणस्वरूप प्रवरनगर नाम की राजधानी है । उसके समीप में बहने वाली वितस्ता ( झेलम ) नदी अपने ऊपर उठे हुए लहरों रूपी हाथों से सुदृढ़ शिलाखंडों से निर्मित प्रवरनगर की चहारदिवारी के अगले हिस्से को मानो स्पर्श करना चाहती है ।

*English trans* : Pravarnagar is it's capital. It is the standard of wealth. It is an ideal of the art of town-planing. The river Vitasta desires to touch the upper part of the rampart made of hard stones with it's hands in the form of waves.

नूनं तस्या जललहरिभिर्वार्यमाणप्रवेश-
स्तिष्ठत्यस्मात् प्रवरनगराद्दूरतः पापसङ्घः ।
तीरे तस्याः क्षितिपरिवृढैः पुण्यनद्याः प्रदत्ता
धर्मावासा द्विजकुलभुवामग्रहारा भवन्ति ।। ३ ।।

**अन्वयः**—नूनं तस्याः जललहरिभिः वार्यमाणप्रवेशः पापसङ्घः अस्मात् प्रवरनगरात् दूरतः तिष्ठति । तस्याः पुण्यनद्याः तीरे क्षितिपरिवृढैः प्रदत्ताः द्विजकुलभुवाम् अग्रहाराः धर्मावासाः भवन्ति ।

**व्याख्या**—नूनमिति । नूनं निश्चयेन, 'नूनमवश्यं निश्चये द्वयम्' इत्यमरः । तस्याः वितस्तायाः, जललहरिभिः सलिलवीचिभिः, वार्यमाणः रुध्यमानः प्रवेशः अन्तरागमनं यस्य सः, पापानां सङ्घः समूहः, अस्मात् प्रवरनगरात्, दूरतः दूरे तिष्ठति, अस्य समीपमपि आगन्तुं न शक्नोति । तस्याः पुण्यनद्याः, तीरे तटे, क्षितिपरिवृढैः राजभिः, प्रदत्ताः वितीर्णाः, द्विजकुलभुवां ब्राह्मणानाम्, अग्रहाराः धर्मस्य आवासाः निवासस्थानानि भवन्ति । तेषु अग्रहारेषु धर्मः सततं निवसति ।

**हिन्दी**—निश्चय ही उस ( वितस्ता ) नदी के जल-लहररूपी हाथों से जिसके प्रवेश को रोक दिया गया है, ऐसा वह पाप-समूह प्रवरनगर से सदैव दूर रहता है । उस पुण्य नदी के तट पर राजाओं द्वारा दिये हुए ब्राह्मणों के अग्रहार धर्म के निवासस्थान हैं । अर्थात् वहाँ आकर साक्षात् धर्म निवास करता है ।

*English trans* : Indeed, the entrance of the sins is obstructed by the surges of Vitasta and so they keep away from that city. The agraharas on the bank of that holy river given by the kings to the Brahmins are the abodes of righteousness.

वासस्थाने जगति विदिते कर्मठानां कठानां
यत्राऽजस्रं श्रवणमधुरो जृम्भते वेदपाठः ।
यं शृण्वन्तो भ्रमररणितं कूजितं कोकिलानां
वीणावेणुक्वणितमधिकं कर्कशं कल्पयन्ति ॥ ४ ॥

**अन्वयः**—कर्मठानां कठानां जगति विदिते यत्र वासस्थाने अजस्रं श्रवणमधुरः वेदपाठः जृम्भते । यं शृण्वन्तः भ्रमररणितं, कोकिलानां कूजितं, वीणावेणुक्वणितं च अधिकं कर्कशं कल्पयन्ति ।

**व्याख्या**—वासस्थाने इति । कर्मठानां कर्मशूराणाम्, 'कर्मशूरस्तु कर्मठः' इत्यमरः । 'कर्मणि घटोऽठच्' इति कर्मशब्दात् अठच् प्रत्ययः, कठानां कठशाखाध्यायिनाम्, कठेन प्रोक्तमधीयते इति कठाः, वैशम्पायनान्तेवासित्वाणिणिनिः । तस्य 'कठचरकाल्लुक्' इति लुक् । ततः 'तेन प्रोक्तम्' इति अण् । तस्य 'प्रोक्ताल्लुक्' इति लुक् । जगति पृथिव्याम्, विदिते प्रसिद्धे, वासस्थाने निवासस्थले, यत्र, अजस्रं सततम्, नित्यानवरताजस्रम्' इत्यमरः । श्रवणमधुरः कर्णसुखदः, वेदपाठः जृम्भते प्रचलति । यं वेदपाठम्, शृण्वन्तः आकर्णयन्तः जनाः, भ्रमराणां भृङ्गाणाम्, रणितं गुञ्जितम्, कोकिलानां कूजितम्, वीणायाः वेणोश्च क्वणितं शब्दम्, अधिकमतिशयम्, कर्कशं कठोरम्, कल्पयन्ति मन्यन्ते । तेभ्योऽपि मधुरः वेदपाठ इत्यर्थः ।

**हिन्दी**—यजुर्वेद की कठशाखा का अध्ययन करने वाले कर्मठ ब्राह्मणों के इस लोकप्रसिद्ध निवासस्थान में प्रतिदिन वेदपाठ होता रहता है, जिसको सुनने वाले लोग उस कर्णमधुर वेदपाठ की तुलना में भौंरों के गुञ्जन को, कोकिलों के कलमधुर स्वर को, वीणा और वेणुध्वनि को अत्यधिक कर्कश कहा करते हैं ।

*English trans :* It is a residence famous in the world of religious Brahmins proficient in the Katha branch of Yajurveda. There always goes on a melodious recital of Vedas. Those who hear it consider in it's comparison the humming of the bees, the cooing of the cuckoos and the sound of the lute and flute very harsh.

भाष्यं पातञ्जलमिह बुधाः पाठयन्तः स्वशिष्या-
नाविष्कुर्वन्त्यतिशययुतां वैदुषीं शब्दशास्त्रे ।
यामालोक्य स्वयमहिपतिस्तत्प्रणेता प्रसन्नो
धुन्वञ्छीर्षं मुहुरुपहरेत् भूयसः साधुवादान् ॥ ५ ॥

**अन्वयः**—इह स्वशिष्यान् पातञ्जलं भाष्यं पाठयन्तः बुधाः शब्दशास्त्रे अतिशययुतां वैदुषीम् आविष्कुर्वन्ति । यामालोक्य प्रसन्नः तत्प्रणेता स्वयम् अहिपतिः मुहुः शीर्षं धुन्वन् भूयसः साधुवादान् उपहरेत् ।

**व्याख्या**—भाष्यमिति । इह प्रवरनगरे, स्वशिष्यान् स्वस्य विद्यार्थिनः, पातञ्जलं भाष्यं महाभाष्यं, पाठयन्तः अध्यापयन्तः, बुधाः पण्डिताः, शब्दशास्त्रे व्याकरणे, अतिशययुतां प्रभूताम्, वैदुषीं पाण्डित्यम्, आविष्कुर्वन्ति प्रकटयन्ति । यां वैदुषीम्, आलोक्य दृष्ट्वा, प्रसन्नः सन्तुष्टः, तस्य महाभाष्यस्य, प्रणेता निर्माता, स्वयम् अहिपति शेषनागः, मुहुः पुनः पुनः, शीर्षं मस्तकम्, धुन्वन् कम्पयन्, भूयसः बहुलान्, साधुवादान् उपहरेत् वितरेत् ।

**हिन्दी**—यहाँ अपने शिष्यों को पातञ्जल-महाभाष्य का अध्यापन करने वाले विद्वज्जन व्याकरणशास्त्र में आश्चर्यजनक निपुणता दिखलाते हैं । जिस ( निपुणता ) को देखकर उस( महाभाष्य )का रचयिता स्वयं शेषनाग भी बार-बार अपना सिर हिलाकर अनेक साधुवाद प्रदान करेगा ।

*English trans* : There, the learned persons while teaching the Patanjal Mahabhashya to their students exhibit great proficiency in grammar, observing which even the Sheshnaga himself the author of that book will be delighted and give a cry of approbation.

द्राक्षापाकं सरसललितं मञ्जुलं काव्यबन्धं
सालङ्कारं कविपरिषदि प्रस्तुतं क्वापि देशे ।
विद्वद्गोष्ठ्यां प्रकृतमथवा पूर्वपक्षोत्तराभ्यां
शास्त्रालापं क्वचिदिह जनाः सम्यगाकर्णयन्ति ।। ६ ।।

**अन्वयः**—इह जनाः क्वापि देशे कविपरिषदि प्रस्तुतं सालङ्कारं द्राक्षापाकं सरसललितं मञ्जुलं काव्यबन्धम् अथवा क्वचित् विद्वद्गोष्ठ्यां पूर्वपक्षोत्तराभ्यां प्रकृतं शास्त्रालापं सम्यक् आकर्णयन्ति ।

**व्याख्या**—द्राक्षापाकमिति । इह प्रवरनगरे जनाः, क्वापि देशे कुत्रचित् प्रदेशे, कवीनां परिषदि सभायाम्, प्रस्तुतं प्रारब्धम्, सालङ्कारम् अलङ्कारैः सहितम्, द्राक्षापाक इव पाकः यस्य तं, द्राक्षारसमधुरम्, सरसं रसेन सहितम् । ललितं लालित्यपूर्णम्, मञ्जुल श्रवणमनोहरम्, काव्यबन्धं काव्यप्रबन्धम्, अथवा क्वचिदन्यत्र, विदुषां गोष्ठ्यां सभायाम्, पूर्वपक्षेण उत्तरपक्षेण च, 'द्वन्द्वादौ द्वन्द्वान्ते द्वन्द्वमध्ये च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेन द्वन्द्वमध्ये श्रूयमाणस्य पक्षपदस्य प्रत्येकमभिसम्बन्धः । प्रकृतं प्रचलितम्, शास्त्रालापं शास्त्रविषयकं विवादम्, सम्यक् सावधानम्, आकर्णयन्ति शृण्वन्ति । अत्रत्या जनाः काव्ये शास्त्रे च कुशला रसिकाश्चेत्यर्थः ।

**हिन्दी**—इस प्रवरनगर में विद्वज्जन कहीं कविपरिषद् में अलंकारों से युक्त द्राक्षाफल के समान मधुर, सरस, ललित और परमरमणीय काव्यरचना को सुना करते हैं और कहीं विद्वज्जनों की शास्त्रार्थ सभा में पूर्वपक्ष तथा उत्तरपक्ष के रूप से चली हुई शास्त्रचर्चा को बड़ी तत्परता के साथ सुना करते हैं ।

*English trans* : There, at some place people are busy in hearing poems sweet like the juice of ripe grapes, beautiful, gentle, melodious and full of figures of speech, being recited in the assembly of poets. At another place some people are engaged in hearing the discussion going on in the assembly of learned persons.

प्राप्ता दूरादिह कविजना मन्दिरं शारदाया
नित्योदञ्चच्छ्रवणमधुरस्वर्णघण्टानिनादम् ।
दत्वा तस्याः करसरसिजे काव्यबन्धं स्वकीयं
तत्स्वीकारादधिगतफला गौरवं भावयन्ति ।। ७ ।।

**अन्वयः**—इह दूरात् नित्योदञ्चच्छ्रवणमधुरस्वर्णघण्टानिनादं शारदायाः मन्दिरं प्राप्ताः कविजनाः तस्याः करसरसिजे स्वकीयं काव्यबन्धं दत्वा तत्स्वीकारात् अधिगतफलाः गौरवं भावयन्ति ।

**व्याख्या**—प्राप्ता इति । इह काश्मीरदेशे प्रवरनगरे, दूरात् दूरप्रदेशात्, नित्यम् उदञ्चन् उद्गच्छन् श्रवणमधुरः श्रोत्रसुखदः स्वर्णघण्टानां मन्दिरे लम्बमानानां सुवर्णनिर्मितानां घण्टानां निनादः यस्य तत्, अनेन शारदाया मन्दिरे सततं दर्शनार्थिनां भक्तानां सम्मर्दो भवतीति सूच्यते । शारदायाः काश्मीराधिष्ठात्र्याः सरस्वत्याः मन्दिरम् आयतनं प्राप्ता आयाताः कविजनास्तस्याः शारदायाः, करसरसिजे करकमले, स्वकीयम् आत्मनः, काव्यबन्धं काव्यप्रबन्धम्, दत्वा विन्यस्य, तस्य काव्यबन्धस्य, शारदया स्वीकारात्, यदि काव्यं रमणीयं स्यात्तर्हि सा स्वीकरोति, अन्यथा तु दूरं परित्यजतीति प्रसिद्धिः । अधिगतं फलं यैस्ते परीक्षायां सफला उत्तीर्णाश्च सन्तः, गौरवं सम्मानम्, भावयन्ति मन्यन्ते ।

**हिन्दी**—यहाँ दूर-दूर देशों से आये हुए कविजन जहाँ प्रतिदिन श्रवण-मधुर सोने के घंटाओं का नाद गूँजता रहता है, ऐसे शारदा के मन्दिर में जाकर उसके कर-कमल में अपना काव्य-प्रबन्ध रखकर शारदा द्वारा उसको स्वीकार कर लेने मात्र रूप फलप्राप्ति से सन्तुष्ट होकर अपने को गौरवान्वित समझा करते हैं ।

*English trans* : Poets come there from distant places to visit the temple of the goddess Sharada where golden bells are always ringing melodiously. They approach the goddess, place their book of poems in her lotus-like hand, if she accepts it consider themselves successful and honoured.

अध्यारूढे हिमनगतटं सन्निधानाद् हिमान्याः
प्रायो यस्मिंस्तपति तपनः शीतरश्मेः समानः ।
काश्मीरीणां वदनकमलैर्निर्जितः शीतभानु-
र्लज्जामग्नः स्फुरति विकसद्रत्नदीपप्रमाणः ।। ८ ।।

**अन्वयः**—हिमनगतटम् अध्यारूढे यस्मिन् हिमान्याः सन्निधानात् तपनः शीतरश्मेः समानः तपति । काश्मीरीणां वदनकमलैः निर्जितः शीतभानुः लज्जा-मग्नः विकसद्रत्नदीपप्रमाणः स्फुरति ।

**व्याख्या**—अध्यारूढे इति । हिमनगस्य हिमाचलस्य, तटमधित्यकाप्रदेशम्, अध्यारूढे आश्रिते, यस्मिन् प्रवरनगरे, हिमान्याः हिमसंहतेः, 'हिमानी हिम-संहतिः' इत्यमरः । 'इन्द्रवरुणे'त्यादिसूत्रेण हिमशब्दान् ङीष् प्रत्ययः आनु-गागमश्च । सन्निधानात् सामीप्यात्, तपनः सूर्यः, प्रायः बाहुल्येन, शीतरश्मेः चन्द्रस्य, समानः तुल्यः, तपति प्रकाशते । काश्मीरीणां काश्मीरदेशनिवासिनीनां सुन्दरीणाम्, वदनकमलैः मुखपद्मैः, निर्जितः पराभूतः, शीतभानुः चन्द्रः, विकसन् प्रकाशमानः, यः रत्नदीपः तत्प्रमाणः तत्सदृशः, स्फुरति दीप्यते ।

**हिन्दी**—हिमाचल के तट पर बसे हुए इस नगर में सदैव हिम का सान्निध्य होने के कारण सूर्य भी प्रायः चन्द्रमा सदृश ही तपा करता है । काश्मीर देश में रहनेवाली सुन्दरियों के मुखकमलों से पराजित हुआ चन्द्रमा लज्जित होकर चमकने वाले रत्नदीप के समान दिखलायी पड़ता है ।

*English trans :* Pravarnagar is situated on the upper part of the Himalaya-mountain. So owing to the frequent snowfall the sun there is as pleasant as the moon. The moon vanquished by the lotus-like faces of Kashmir ladies, bashful, appears like a shining lamp of jewels.

द्राक्षा साक्षादमृतमधुरा यत्र वामाधराणां
याता सख्यं हसति सरयुस्वादुपुण्ड्रेक्षुदण्डम् ।
आतन्वन्तो दिशि दिशि निजं सौरभं मुक्तहस्तं
काव्यैः साम्यं दधति मसृणैः केसराः कुङ्कुमानाम् ॥ ९ ॥

**अन्वयः**—यत्र साक्षात् अमृतमधुरा द्राक्षा वामाधराणां सख्यं याता सरयुस्वादुपुण्ड्रेक्षुदण्डं हसति । दिशि दिशि मुक्तहस्तं निजं सौरभम् आतन्वन्तः कुङ्कुमानां केसराः मसृणैः काव्यैः साम्यं दधति ।

**व्याख्या**—द्राक्षेति । यत्र प्रवरनगरे, साक्षात् 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः । अमृतमधुरा अमृततुल्यं माधुर्यं बिभ्रती, द्राक्षा वामानां सुन्दरस्त्रीणाम्, 'प्रतीपदर्शिनी वामा' इत्यमरः । अधराणाम् ओष्ठानाम्, सख्यं मैत्रीम्, याता प्राप्ता, सरयोः स्वादुमधुरं पुण्ड्रेक्षुदण्डं, हसति जयति । दिशि दिशि प्रतिदिशम्, मुक्तहस्तं प्रभूतम्, सौरभं सुगन्धम्, आतन्वन्तः विकिरन्तः, कुङ्कुमानां काश्मीरजानाम्, केसराः किञ्जलकाः, 'किञ्जलकः केसरोऽस्त्रियाम्' इत्यमरः । मसृणैः कोमलैः, काव्यैः साम्यं सादृश्यम्, दधति धारयन्ति ।

**हिन्दी**—साक्षात् अमृत के समान मधुर द्राक्षाफल, सुन्दर युवतियों के अधरों की मित्रता को पाकर सरयूनदी के तट पर होने वाले ईख की मधुरता का उपहास करते हैं और प्रत्येक दिशा में खुले हाथों अपनी सुगन्ध को बिखेरने वाले कुंकुम के केसर सरस कवि-कृतियों की समानता को धारण करते हैं ।

*English trans* : There, the ripe fruits of grapes are as sweet as the nectar itself and form a friendship with the lips of beautiful ladies. In sweetness they excell the sugarcane grown on the bank of the river Sarayu. The filaments of saffron spread their perfume in all the directions generously and resemble the tender sprouts of poems.

यत्रोन्मीलत्स्थलकमलिनीपुष्पगन्धाभिरामः
प्रत्याचष्टे मलयपवनं शीतलो गन्धवाहः ।
सङ्क्रीडन्ती नलिनविपिने चञ्चला भृङ्गमाला
निःसन्देहं मदनधनुषः शिञ्जिनीत्वं बिभर्ति ॥ १० ॥

**अन्वयः**—यत्र उन्मीलत्स्थलकमलिनीपुष्पगन्धाभिरामः शीतलः गन्धवाहः मलयपवनं प्रत्याचष्टे । नलिनविपिने सङ्क्रीडन्ती चञ्चला भृङ्गमाला निःसन्देहं मदनधनुषः शिञ्जिनीत्वं बिभर्ति ।

**व्याख्या**—यत्रेति । यत्र प्रवरनगरे, उन्मीलन्ति विकसन्ति यानि स्थल-कमलिनीनां भाषायां 'गुलाब' इति प्रसिद्धानां पुष्पाणि कुसुमानि तेषां गन्धेन सौरभेण अभिरामः रमणीयः, शीतलः गन्धवाहः वायुः, मलयपवनं मलया-निलम्, प्रत्याचष्टे निरस्यति । मलयानिलात् प्रशस्यतर इत्यर्थः । 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः' इत्यमरः । नलिनानां कमलानां, विपिने वने, सङ्क्रीडन्ती गुञ्जन्ती 'समोऽकूजने' इति कूजनार्थे आत्मनेपदप्रतिषेधः । चञ्चला चपला, भृङ्गाणां भ्रमराणाम्, माला पङ्क्तिः, निःसन्देहं निःसंशयम्, मदनस्य कामस्य, धनुषः कार्मुकस्य, शिञ्जिनीत्वं मौर्वीत्वम्, 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । बिभर्ति धत्ते ।

**हिन्दी**—वहाँ के विकसित होनेवाले गुलाब के फूलों की सुगन्ध से आकर्षक शीतलवायु मलयपवन को भी परास्त कर देता है, कमल के बन में गुंजन करने वाला चंचल भौंरों का समूह मानो सचमुच कामदेव के धनुष की डोरी का स्थान ले रहा हो ।

*English trans* : There, the cool breeze charming with the perfume of blooming roses disregards the south wind. Indeed the flight of bees humming in the cluster of lotuses becomes the string of the cupid's bow.

अंसोत्तंसं कनककलितैस्तन्तुभिर्गुम्फिताग्रं
सूक्ष्मं चित्रं सुरभि घुसृणै राङ्कवं सन्दधानाः।
यत्र ज्योत्स्नावलयधवले कुङ्कुमक्षेत्रदेशे
किञ्जल्काढ्ये प्रणयनिरताः कामिनः सञ्चरन्ति ॥ ११ ॥

**अन्वयः**—यत्र कनककलितैः तन्तुभिः गुम्फिताग्रं सूक्ष्मं चित्रं घुसृणैः सुरभि अंसोत्तंसं राङ्कवं सन्दधानाः प्रणयनिरताः कामिनः ज्योत्स्नावलयधवले किञ्जल्काढ्ये कुङ्कुमक्षेत्रदेशे सञ्चरन्ति।

**व्याख्या**—अंसोत्तंसमिति। यत्र प्रवरनगरे, कनकेन सुवर्णेन कलितैः निर्मितैः, तन्तुभिः सूत्रैः, गुम्फितम् अग्रम् अग्रभागः यस्य तत्, सुवर्णतन्तु-( जरी )मण्डितप्रान्तदेशमित्यर्थः। सूक्ष्मं श्लक्ष्णं, चित्रं नानावर्णं, घुसृणैः कुङ्कुमैः, सुरभि सुगन्धि, अंसयोः स्कन्धयोः, उत्तंसम् अलङ्करणं, राङ्कवं मृगरोमजं, 'राङ्कवं मृगरोमजम्' इत्यमरः। काश्मीरदेशे निर्मितं 'पशमीना' इति ख्यातं वस्त्रविशेषं, सन्दधानाः धारयन्तः, प्रणये प्रणयव्यापारे निरताः व्यापृताः, कामिनः कामिन्यश्च कामिनः, 'पुमान् स्त्रिया' इत्येकशेषः। ज्योत्स्नायाः चन्द्रिकायाः, वलयेन मण्डलेन, धवले शुभ्रे, किञ्जिल्कैः केसरैः आढ्ये पूर्णे, कुङ्कुमानां काश्मीराणां, क्षेत्रदेशे केदारे, सञ्चरन्ति विहरन्ति।

**हिन्दी**—जहाँ जरीयुक्त धागों से जिनके किनारे शोभा को धारण कर रहे हैं, ऐसे हल्के, पतले, रंग-बिरंगे केसर की गन्ध से सुवासित पशमीना को दुशाला की भाँति कन्धे पर धारण कर प्रणय-क्रीड़ा में लगे हुए कामीजन चाँदनी के आलोक से आलोकित केसरों से भरी-पुरी भूमि पर विहार करते हैं।

*English trans* : There, lovers with a pashmina shawl, delicate, variegated and perfumed by saffron on their shoulders stroll in the field of saffron in the moonlight.

अम्भः कुम्भात् तुहिनशकलैः शीतलं पीयमाना
द्राक्षारामादचिरकलितान्यालिहन्तः फलानि ।
शय्यां रम्यां सरसिजदलैः कल्पितामाश्रयन्तो
वासं ग्रीष्मे विदधति जना यत्र नौकागृहेषु ॥ १२ ॥

**अन्वयः**—यत्र कुम्भात् तुहिनशकलैः शीतलम् अम्भः पीयमानाः द्राक्षारामात् अचिरकलितानि फलानि आलिहन्तः सरसिजदलैः कल्पितां रम्यां शय्याम् आश्रयन्तः जनाः ग्रीष्मे नौकागृहेषु वासं विदधति ।

**व्याख्या**—अम्भ इति । यत्र प्रवरनगरे, कुम्भात् कलशात्, तुहिनशकलैः हिमखण्डैः, शीतलम् अम्भः जलम्, पीयमानाः पिबन्तः, 'पीङ् पाने' इति दिवादेः शानचि रूपम् । 'पिबत्याचामति धयत्यत्र पाने च पीयते' इत्याख्यातचन्द्रिका । द्राक्षाणाम् आरामात् उद्यानात्, अचिरात् कलितानि सङ्गृहीतानि, नूतनानीत्यर्थः । फलानि आलिहन्तः भक्षयन्तः, सरसिजानां कमलानाम्, दलैः पत्रैः कल्पितां रचिताम्, रम्यां रमणीयाम्, शय्यां शयनम्, आश्रयन्तः जनाः ग्रीष्मे निदाघकाले, नौकागृहेषु नौका एव गृहास्तेषु, 'शिकारा' इति ख्यातेषु वासं वसतिं, विदधति कुर्वन्ति ।

**हिन्दी**—जहाँ के निवासी मिट्टी के घड़ों में रखे हुए और बर्फ के टुकड़ों से शीतल किये हुए जल को पीकर मुनक्का के बगीचे से तोड़कर लाये हुए ताजे फलों का स्वाद लेते हुए कमल-किसलयों की सुखद शय्या पर सोकर गर्मी के दिनों में नावों पर बनाये गये घरों ( शिकारों ) में निवास किया करते हैं ।

*English trans* : There, in summer, people live in house-boats drinking water cooled with pieces of ice from a pitcher, lasting grapes newly gathered from an orchard, lying down on a bed made of lotus-leaves.

यस्योत्तुङ्गा भवनवलभीः संश्रिताः पौरयोषा
जित्वा चन्द्रं गगनतिलकं वक्त्रपद्मैः सलीलम् ।
ईर्ष्यावेशात् सुरपुरगतां ख्यातलावण्यलीलां
जेतुं काङ्क्षन्त्यखिलकरणैर्मेनकामुर्वशीं च ॥ १३ ॥

**अन्वयः**—यस्य उत्तुङ्गाः भवनवलभीः संश्रिताः पौरयोषाः वक्त्रपद्मैः गगनतिलकं चन्द्रं सलीलं जित्वा ईर्ष्यावेशात् सुरपुरगतां ख्यातलावण्यलीलां मेनकाम् उर्वशीं च अखिलकरणैः जेतुं काङ्क्षन्ति ।

**व्याख्या**—यस्येति । यस्य प्रवरनगरस्य, उत्तुङ्गाः उन्नताः, भवनस्य गृहस्य वलभीः चन्द्रशालाः, संश्रिताः आश्रिताः, पौरयोषाः नगरवनिताः, वक्त्रपद्मैः मुखकमलैः, गगनस्य नभसः, तिलकं तिलकतुल्यम् अलङ्करणं चन्द्रं, सलीलं लीलयैव न तु प्रयत्नेन, जित्वा पराभूय, ईर्ष्यावेशात् चन्द्रजयात् जातोत्साहाः स्पर्धावशात्, सुरपुरगतां स्वर्गवासिनीं, ख्याता प्रसिद्धा, लावण्यस्य सौन्दर्यस्य लीला विलासः यस्याः ताम्, मेनकाम् उर्वशीं च, 'स्त्रियां बहुष्वप्सरसः स्ववेंश्या उर्वशीमुखाः । उर्वशी मेनका रम्भा घृताची च तिलोत्तमा ॥ सुकेशीमञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः ।' इत्यमरः । अखिलैः सर्वैः, करणैः अवयवैः, 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः । जेतुम् अभिभवितुं, काङ्क्षन्ति इच्छन्ति ।

**हिन्दी**—वहाँ के नागरिकों की स्त्रियाँ ऊँची चन्द्रशालाओं पर चढ़कर गगनभूषण चन्द्रमा को अपने मुखकमलों की लीला से पराजित करके ईर्ष्यावश होकर अपने सम्पूर्ण शरीरावयवों द्वारा स्वर्गलोक में निवास करनेवाली शरीर-सौन्दर्य आदि से प्रसिद्धि को प्राप्त मेनका और उर्वशी को भी जीतने की इच्छा किया करती हैं ।

*English trans* : There, the ladies of the town standing on the top of the houses easily surpass the moon with their lotus-like faces. Thus encouraged they wish to excell Menaka and Urvashi the celestial damsels famous for their beauty in general appearence.

यत्र प्रातः पुरयुवतयो गाहमाना वितस्तां
निद्रालोलान् मधुपकलभान् मोहयन्त्यो मुखाब्जैः ।
दृष्ट्वा हित्वा कमलमुकुलान्यागतानात्मवक्त्रे
हस्तैर्गुञ्जत्कनकवलयैः साध्वसाद् वारयन्ति ॥ १४ ॥

**अन्वयः**—यत्र प्रातः वितस्तां गाहमानाः, मुखाब्जैः निद्रालोलान् मधुपकलभान् मोहयन्त्यः पुरयुवतयः कमलमुकुलानि हित्वा आत्मवक्त्रे आगतान् दृष्ट्वा गुञ्जत्कनकवलयैः हस्तैः साध्वसात् वारयन्ति ।

**व्याख्या**—यत्रेति । यत्र प्रवरनगरे, प्रातः प्रभातकाले, वितस्तां गाहमानाः मज्जनाय प्रविष्टाः मुखाब्जैः मुखकमलैः, निद्रया लोलान् चञ्चलान्, अथवा निद्रायां लोलान् सतृष्णान्, 'लोलश्चलसतृष्णयोः' इत्यमरः । मधुपकलभान् भ्रमरकिशोरान्, बालभ्रमरानित्यर्थः । तेषामेव मोहः सुलभः, मोहयन्त्यः आकर्षयन्त्यः, कमलस्य मुकुलानि कुड्मलानि, 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । हित्वा त्यक्त्वा, आत्मनः वक्त्रे मुखे, आगतान् दृष्ट्वा विलोक्य, गुञ्जन्ति शब्दायमानानि कनकवलयानि सुवर्णकटकानि येषां तैः, 'कटको वलयोऽस्त्रियाम्' इत्यमरः । हस्तैः करैः, वारयन्ति अपसारयन्ति, अनेन तासां पद्मिनीनायिकात्वं स्पष्टं व्यज्यते । अत्र भ्रान्तिमानलङ्कारः ।

**हिन्दी**—उस प्रवरनगर में प्रातःकाल वितस्ता नदी में स्नान करनेवाली नगर की नारियाँ अपने मुखकमलों से ( प्रातःकाल हो जाने पर भी ) निद्रा से अलसाये हुए बालभ्रमरों को मोहित कर रही हैं और वे भी जब कमल-मुकुलों को छोड़कर उनके मुखों के ऊपर मँडराने लगते हैं, तो वे भयभीत होकर खनखनाते हुए सोने के कंगनों वाले हाथों से उनको दूर हटाती हैं ।

*English trans* : There, the ladies of the town bathing in the river Vitasta in the morning attract the sleepy young bees by their lotus-like faces. Then having observed that the bees have left the lotus-buds and come to their faces drive them away in fear waving their hands jingling with golden bracelets.

यस्मिन् पूर्वं नगपतिसुतामुद्वहँश्चन्द्रचूडो
भस्मीभूतं नयनदहने जीवयामास कामम् ।
नो चेत् स्त्रीणां कथमधिवसन् भङ्गुरं नेत्रकोणं
चित्तं यूनां कुसुमविशिखो मोहमग्नं करोति ॥ १५ ॥

**अन्वयः**—पूर्वं यस्मिन् नगपतिसुताम् उद्वहन् चन्द्रचूडः नयनदहने भस्मीभूतं कामं जीवयामास । नो चेत् स्त्रीणां भङ्गुरं नेत्रकोणम् अधिवसन् कुसुमविशिखः यूनां चित्तं कथं मोहमग्नं करोति ?

**व्याख्या**—यस्मिन्निति । पूर्वं प्राक्काले, यस्मिन् प्रवरनगरे, नगपतेः हिमालयस्य सुतां कन्याम् पार्वतीम्, उद्वहन् परिणयन्, चन्द्रचूडः शिवः, नयनस्य दहने अग्नौ, भस्मीभूतं दग्धं, कामं मदनम्, जीवयामास पुनर्जीवनं प्रापयामास । नो चेत् अन्यथा, स्त्रीणां भङ्गुरं भङ्गशीलं कुटिलमित्यर्थः 'भञ्जभासमिदो घुरच्' इति सूत्रेण भञ्जेर्घुरच् प्रत्ययः । नेत्रयोः कोणं प्रान्तभागम्, अधिवसन् आश्रयन्, कुसुमविशिखः मदनः, यूनां तरुणानां, चित्तं मनः, कथं केन प्रकारेण, मोहे भ्रमे, मग्नं लीनं, करोति । अन्यथा युवतयः कटाक्षमात्रेणैव तरुणान् कथं वशयन्ति ? इत्याशयः ।

**हिन्दी**—प्राचीन समय में वहाँ हिमालय की कन्या का पाणिग्रहण करते समय भगवान् शिव ने अपनी नेत्राग्नि से भस्म किये हुए कामदेव को फिर जीवित कर दिया था, यदि ऐसा न होता तो स्त्रियों के कुटिलनेत्रकोण में निवास करनेवाला कामदेव युवकों के हृदयों को कैसे मोहित कर लेता ?

*English trans* : There, lord Shiva at the time of his wedding with Parvati restored the cupid to life who was reduced to ashes in the fire of his eye. Otherwise how can the cupid residing in the crooked corner of the eyes of beautiful ladies infatuate the mind of young people ?

पर्यङ्कार्थं मृदुलनलिनीपल्लवानाश्रयन्तः
स्वेच्छालभ्यं बिसकिसलयं भक्षयन्तः प्रकामम् ।
दोलान्दोलं पवनचपले वीचिजाले भजन्तो
यस्मिन् वर्षास्वपि जहति नो राजहंसा वितस्ताम् ।। १६ ।।

**अन्वयः**—पर्यङ्कार्थं मृदुलनलिनीपल्लवान् आश्रयन्तः, स्वेच्छालभ्यं बिसकिसलयं प्रकामं भक्षयन्तः, पवनचपले वीचिजाले दोलान्दोलं भजन्तः राजहंसाः यस्मिन् वर्षासु अपि वितस्तां नो जहति ।

**व्याख्या**—पर्यङ्कार्थमिति । पर्यङ्कार्थं शयनार्थम्, 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः । मृदुलान् कोमलान्, 'कोमलं मृदुलं मृदु' इत्यमरः । नलिनीपल्लवान् कमलपत्राणि, आश्रयन्तः अधिशयानाः स्वेच्छया न तु पारतन्त्र्येण, लभ्यं प्राप्यम्, बिसकिसलयं बिसतन्तून्, प्रकामं यथेष्टम्, 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्' इत्यमरः । भक्षयन्तः आस्वादयन्तः, पवनेन वायुना, चपले चञ्चले, वीचिजाले तरङ्गमालायां, दोलान्दोलं दोलाविहारम्, भजन्तः अनुभवन्तः, राजहंसा यस्मिन् प्रवरनगरे, वर्षासु वर्षाकालेऽपि, वितस्तां नो जहति न त्यजन्ति । अन्यत्र गता राजहंसाः पुनर्वर्षासु मानसमेव गच्छन्तीति प्रसिद्धिः ।

**हिन्दी**—शयन करने के लिए कोमल कमलपत्रों का आश्रय लेनेवाले, सरलता से प्राप्त होनेवाले मृणाल-खंडों का यथेष्ट भक्षण करनेवाले, हवा के झोंकों से हिलने वाली तरंगों पर झूलने वाले राजहंस वहाँ वर्षा ऋतु में भी वितस्ता ( झेलम ) नदी को नहीं छोड़ते, अर्थात् यहाँ का जल सदैव निर्मल ही रहता है, अर्थात् कभी मलिन नहीं होता है ।

*English trans :* There, the swans use the tender leaves of lotuses for their bed. They eat to their heart's content the lotus-fibres which are available at desire and enjoy a swing on the surges caused by the wind. They are so happy there that they do not leave Vitasta even in the rainy season.

हस्ते पद्मं कुचकलशयोः कौङ्कुमीं पत्रलेखां
कट्यां काञ्चीं क्वणितमुखरं नूपुरं पादलग्नम् ।
बद्धां केशे स्थलकमलिनीपुष्पमालां दधाना
यस्मिन् रामाः सरणिषु पुरः संष्ठुलं सञ्चरन्ति ।। १७ ।।

**अन्वयः**—यस्मिन् हस्ते पद्मं, कुचकलशयोः कौङ्कुमीं पत्रलेखां, कट्यां काञ्चीं, पादलग्नं क्वणितमुखरं नूपुरं, केशे बद्धां स्थलकमलिनीपुष्पमालां दधानाः रामाः पुरः सरणिषु संष्ठुलं सञ्चरन्ति ।

**व्याख्या**—हस्त इति । यस्मिन् प्रवरनगरे, हस्ते पद्मं कमलम्, कुचकलशयोः स्तनयोः, कौङ्कुमीं कुङ्कुमपत्ररचिताम्, पत्रलेखां पत्रावलिम्, 'अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे' इत्यमरः । कट्यां नितम्बप्रदेशे, काञ्चीं मेखलाम्, पादयोः लग्नं निविष्टम्, क्वणितेन मधुरनिनादेन, मुखरं वाचालं, नूपुरं मञ्जीरं, केशे केशपाशे, बद्धां स्थलकमलिनीपुष्पाणां गुलाबकुसुमानां मालां दधानाः, रामाः स्त्रियः, पुरः नगरस्य, सरणिषु मार्गेषु, 'अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः, सरणिः पद्धतिः पद्या' इत्यमरः । संष्ठुलं मन्दं, सञ्चरन्ति अटन्ति ।

**हिन्दी**—उस( प्रवरपुर )में हाथ में कमल, स्तनमंडल पर केसर के घोल से पत्ररचना, नितम्ब-भाग पर मेखला, चरणों पर कलमधुर शब्द करनेवाले नूपुर ( पायल ) तथा केशपाश ( जूड़े ) में गुलाब के फूलों की माला को धारण करनेवाली स्त्रियाँ नगर के मार्गों में धीरे-धीरे घूमा करती हैं ।

*English trans* : The ladies of the town, with a louts in their hand, painting of saffron on the breast, a girdle on the waist, a pair of jingling ankelets on the feet and agarl and of roses in their hair move on the streets of the city with a fine gait.

सत्ये धर्मो वसुषु धनदः पालने रामचन्द्रः
स्थैर्ये मेरुर्वचसि धिषणः सङ्गरे सव्यसाची ।
दाने कर्णो वपुषि मदनश्चण्डभानुः प्रतापे
भूपो यस्मिन्नवनितिलको राजतेऽनन्तदेवः ॥ १८ ॥

**अन्वयः**—यस्मिन् सत्ये धर्मः, वसुषु धनदः, पालने रामचन्द्रः, स्थैर्ये मेरुः, वचसि धिषणः, सङ्गरे सव्यसाची, दाने कर्णः, वपुषि मदनः, प्रतापे चण्डभानुः, अवनितिलकः अनन्तदेवः भूपः राजते ।

**व्याख्या**—सत्ये इति । यस्मिन् प्रवरनगरे, सत्ये सत्यभाषणे, धर्मः धर्मराजः युधिष्ठिरः, युधिष्ठिरतुल्य इत्यर्थः । एवं सर्वत्र योजनीयम्, वसुषु धने मणिकनकादिषु च, धनदः कुबेरः, 'देवभेदेऽनले रश्मौ वसूरत्ने धने वसु' इत्यमरः । पालने प्रजारक्षणे, रामचन्द्रः भगवान् दाशरथिः, स्थैर्ये स्थिरतायां, दृढतायामित्यर्थः । मेरुः सुमेरुपर्वतः, वचसि वाग्विन्यासे वाग्मितायां वा, धिषणः बृहस्पतिः, 'बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः' इत्यमरः । सङ्गरे युद्धे, सव्यसाची अर्जुनः, दाने कर्णः, वपुषि शरीरे रूपे इत्यर्थः । मदनः कामः, प्रतापे चण्डभानुः सूर्यः, अवनेः पृथिव्याः तिलकः तिलकसदृशः, अलङ्कार इत्यर्थः । अनन्तदेवः अनन्तदेवनामा, भूपः नृपतिः, राजते शोभते । महाराजाधिराजः श्रीमाननन्तदेवः १०२८ ख्रिष्टाब्दात् १०८० ख्रिष्टाब्दपर्यन्तं काश्मीरान् शशास । अत्र रूपकालङ्कारः ।

**हिन्दी**—उस नगर में सत्यभाषण करने में साक्षात् धर्मराज, सम्पत्ति में कुबेर, प्रजा का पालन करने में भगवान् रामचन्द्र, स्थिरता में सुमेरु पर्वत, वाक्पटुता में बृहस्पति, युद्ध में अर्जुन, दान में कर्ण, रूप में कामदेव और प्रताप में सूर्यदेव के सदृश भूलोक के अलंकार सदृश राजा अनन्तदेव राज्य किया करते थे । इनका शासनकाल १०२८ से १०८० ई० के मध्य था ।

*English trans* : The illustrious Anantadeva is the king there. In truthfulness he is Dharmaraja Udhishthira incarnate. In wealth he is equal to Kuber. In protecting his subjects he is like Lord Ramchandra. In firmness he is Meru mountain itself. In wisdom he is like Bruhaspati. In war he is another Arjun. In generosity he is Karna himself. He is as handsome as the cupid and in splendour he is equal to the sun.

यस्मिन् राज्ञि प्रवहति धुरं बाहुदण्डे धरायाः
शेषः शीर्षव्यपगतभरो विश्रमं सन्तनोति।
क्रीडां मेरोस्तटभुवि पुनर्दिग्गजाः प्रारभन्ते
क्लेशं पृष्ठव्रणगणभवं कूर्मराजो जहाति ॥ १९ ॥

**अन्वयः**—यस्मिन् राज्ञि बाहुदण्डे धरायाः धुरं प्रवहति शीर्षव्यपगतभरः शेषः विश्रमं सन्तनोति। दिग्गजा मेरोः तटभुवि पुनः क्रीडां प्रारभन्ते। कूर्मराजः पृष्ठव्रणगणभवं क्लेशं जहाति।

**व्याख्या**—यस्मिन्निति। यस्मिन् राज्ञि अनन्तदेवे, बाहुदण्डे भुजदण्डे, धरायाः पृथ्व्याः, धुरं भारम्, प्रवहति धारयति सति, 'प्राद्वहः' इति परस्मैपदम्। शीर्षात् मस्तकात्, व्यपगतः दूरीभूतः भरो भारो यस्य सः, शेषः शेषनागः, विश्रमं विश्रान्तिं श्रमापनोदं, सन्तनोति कुरुते। दिग्गजा दिक्कुञ्जराः मेरोः मेरुपर्वतस्य, तटभुवि तटप्रदेशे, पुनः क्रीडां वप्रक्रीडाम् उत्खातकेलिं प्रारभन्ते। कूर्मराजः आदिकच्छपः, धराधारणेन जन्यः पृष्ठे पृष्ठभागे यः व्रणगणः क्षतनिचयः तद्भवं तज्जन्यं, क्लेशं दुःखं, जहाति त्यजति। सर्वेऽपि शेषप्रभृतयः पृथ्वीभारवहनकार्यान्निवृत्तिमासाद्य सुखिनः सम्पद्यन्त इत्यर्थः।

**हिन्दी**—उस राजा ( अनन्तदेव ) द्वारा अपनी भुजाओं पर पृथ्वी का भार धारण कर लेने पर शेषनाग के सिर का भार हल्का हो जाने से उसे विश्राम मिलने लगा। दिग्गज फिर से मेरुपर्वत के तटप्रदेश पर वप्रक्रीड़ा करने लगे हैं। कूर्मराज के पीठ पर उत्पन्न व्रणों का दुःख समाप्त हो गया।

अर्थात् इन्होंने जब से भूभार सँभाला तब से शेषनाग, दिग्गज और कूर्मराज ये सब निश्चिन्त अतएव सुखी हो गये।

*English trans* : Since that king has taken over tht yoke of the earth upon his strong arm the burden on the head of the Sheshnaga has been totally removed and he is enjoying complete rest. The elephants of the quarters have again started their sport of butting against the precipice of the Meru-mountain. The great tortoise is no longer afflicted by the pain caused by the injuries on it's back.

जित्वा युद्धे यवननृपतिं बाह्लिकानामधीशं
लब्ध्वा तस्मात् पवनजयिनो यस्तुरङ्गानसङ्ख्यान् ।
प्रत्यागच्छन् प्रवरनगरं तत्खुरोत्थैरकाण्डे
पांशुव्रातैरतनुत कृती चन्द्रसूर्योपरागम् ॥ २० ॥

**अन्वयः**—यः कृती युद्धे बाह्लिकानाम् अधीशं यवननृपतिं जित्वा तस्मात् पवनजयिनः असङ्ख्यान् तुरङ्गान् लब्ध्वा प्रवरनगरं प्रत्यागच्छन् तत्खुरोत्थैः पांशुव्रातैः अकाण्डे चन्द्रसूर्योपरागम् अतनुत ।

**व्याख्या**—जित्वेति । यः कृती महाशयः, युद्धे बाह्लिकानां देशविशेषस्य, अधीशम् अधिपतिं, यवननृपतिं म्लेच्छराजं, जित्वा पराभूय, तस्मात् पवनजयिनः पवनात् वायोः अधिकवेगशालिनः, असङ्ख्यान् प्रभूतान् तुरङ्गान् अश्वान्, लब्ध्वा प्राप्य, प्रवरनगरं स्वराजधानीम्, प्रत्यागच्छन् प्रतिनिवृत्तः, तत्खुरोत्थैः तेषाम् अश्वानां खुरेभ्यः उत्थितैः, पांशुव्रातैः धूलिपटलैः, 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' इत्यमरः । अकाण्डे अनवसरे, असमये इत्यर्थः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । चन्द्रसूर्ययोः उपरागं ग्रहणम् । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरः । अतनुत चकार ।

**हिन्दी**—उस पुण्यात्मा ने युद्ध में बलखदेश के यवनराज को जीतकर उससे उपहार में अपने वेग से वायु को पराजित करनेवाले असंख्य घोड़ों को प्राप्त कर प्रवरनगर की ओर लौटते समय उनके खुरों से उड़नेवाली धूलिसमूह से ग्रहण का समय न होने पर भी सूर्य और चन्द्र ग्रहण का दृश्य उपस्थित कर दिया था ।

अर्थात् उन घोड़ों के खुरों से उड़ी हुई धूलि ने सम्पूर्ण गगनमंडल को घेर लिया था, जिससे सूर्य-चन्द्र ग्रहण की अकाल में भ्रान्ति होने लगी ।

*English trans* : He has defeated the Yavan king of Bulkha in the battle. That king gave him innumerable horses swifter than the wind as a gift. While returning with them to Pravarnagar he caused the eclipse of the sun and the moon with the dust raised by the hoofs of those horses.

वीरश्चम्पां व्यजयत जयस्तम्भमुच्चैर्न्यखानीद्
येनाऽऽरुह्य त्रिदिवमगमन्निर्भरं यस्य कीर्तिः।
पारावारानतरदचलान् दुर्गमानध्यरुक्षत
पातालान्तर्व्यचरदहिभिर्लोचनैः श्लाघ्यमाना ॥ २१ ॥

**अन्वयः**—वीरः चम्पां व्यजयत। उच्चैः जयस्तम्भं न्यखानीत्। येन आरुह्य यस्य कीर्तिः निर्भरं त्रिदिवम् अगमत्। पारावारान् अतरत्। दुर्गमान् अचलान् अध्यरुक्षत्। अहिभिः लोचनैः श्लाघ्यमाना पातालान्तः व्यचरत्।

**व्याख्या**—वीर इति। वीरः शूरः अनन्तदेवः, चम्पां चम्पानगरीं, व्यजयत जितवान्। 'विपराभ्यां जेः' इत्यात्मनेपदम्। तत्र उच्चैः उन्नतं, जयस्तम्भं जयसूचकं स्तम्भं न्यखानीत् निचखान। येन जयस्तम्भेन, आरुह्य उपरि गत्वा, यस्य अनन्तदेवस्य, कीर्तिः निर्भरम् अत्यन्तम्, त्रिदिवं स्वर्गलोकम्, अगमत् जगाम। 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः। पारावारान् समुद्रान्, अतरत् उल्ललङ्घ। दुर्गमान् गन्तुं कठिनान्, अचलान् पर्वतान्, अध्यरुक्षत् अधिरूढा। अधिपूर्वकस्य रुहधातोः लुङि रूपम्। 'शल इगुपधादनिटः क्सः' इति क्सः। अहिभिः नागैः, लोचनैः नयनैः, श्लाघ्यमाना आद्रियमाणा, तेषां चक्षुःश्रवत्वात्, पातालान्तः पाताले, व्यचरत् विचचार।

**हिन्दी**—उस वीरपुरुष ने चम्पा नगरी को जीतकर वहाँ एक ऊँचा विजय-स्तम्भ गाड़ दिया, जिस पर चढ़कर उस वीर की सत्कीर्ति यहाँ से स्वर्गलोक तक चली गयी, उसकी कीर्ति ने समुद्रों को भी लाँघ दिया, दुर्गम पर्वत-शिखरों पर भी वह छा गयी और सर्पों की आँखों को रिझाती हुई वह पाताललोक में भी भ्रमण करने लगी, अर्थात् महाराज अनन्तदेव की कीर्ति तीनों लोकों में फैल गयी।

*English trans* : That great warrior has conquered the city of Champa. He has irrected a lofty triumphal column there. His glory has gone to the heaven climbing up by that column. It has crossed the oceans and ascended the inaccessible mountains. It has gone to the lower region and wandered there appreciated by their snakes by their eyes.

यातो जेतुं धनदनगरीं मानसं गाहमानां
दृष्ट्वा हंसैः कनकघटितैः कीर्तिहंसीं स्वकीयाम् ।
स्मृत्वा सद्यः प्रियतमसखं चन्द्रमौलेः कुबेरं
माहेशो यो न्यवृतदलकां हस्तगामप्यजित्वा ॥ २२ ॥

**अन्वयः**—यः माहेशः धनदनगरीं जेतुं यातः कनकघटितैः हंसैः मानसं गाहमानां स्वकीयां कीर्तिहंसीं दृष्ट्वा सद्यः कुबेरं चन्द्रमौलेः प्रियतमसखं स्मृत्वा हस्तगाम् अपि अलकाम् अजित्वा न्यवृतत् ।

**व्याख्या**—यात इति । यः माहेशः माहेश्वरः शिवभक्तः अनन्तदेवः, धनदस्य कुबेरस्य, नगरीम् अलकां, जेतुं यातः गतः । कनकघटितैः हिरण्मयैः, हंसैः राजहंसैः सह, सहयोगं विनाऽपि 'वृद्धो यूना' इत्यादि निर्देशात् तृतीया । मानसं मानससरोवरं, गाहमानां तत्र क्रीडन्तीं, स्वकीयाम् आत्मनः, कीर्तिरूपां हंसीं, दृष्ट्वा विलोक्य, सद्यः तत्क्षणे, 'सद्यः सपदि तत्क्षणे' इत्यमरः । कुबेरं चन्द्रमौलेः शिवस्य स्वोपास्यस्य, प्रियतमसखं परमसुहृदं, स्मृत्वा हस्तगामपि हस्तगतामपि अलकाम्, अजित्वा नजित्वा, न्यवृतत् निवृत्तः । 'द्युद्भ्यो लुङि' इति परस्मैपदम् । महतां दिग्विजयस्य कीर्तिमात्रफलकत्वात् मानसपर्यन्तं प्रसृतां स्वकीर्तिं ज्ञात्वा शिवसखस्य कुबेरस्य पराजयः माहेश्वरस्य आत्मनः नोचित इति विभाव्य अलकामअ जित्वैव निवृत्त इति भावः । हस्तगामित्यत्र 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति वार्तिकेन डप्रत्ययः ।

**हिन्दी**—परममाहेश्वर महाराज अनन्तदेव कुबेर की नगरी अलका को जीतने के लिए जब जाने लगे तो मानसरोवर में सोने के राजहंसों के साथ क्रीड़ा करती हुई अपनी कीर्तिरूपी हंसी को देखकर, कुबेर भगवान् शिव के परममित्र हैं, इस बात का स्मरण हुआ और वे हाथ में आयी हुई भी अलकानगरी को बिना जीते ही वहाँ से तत्काल लौट आये ।

अर्थात् जब कीर्तिहंसी वहाँ तक पहले ही पहुँच चुकी है, तो फिर अपने आराध्य भगवान् शिव के परममित्र कुबेर के साथ युद्ध करना महाराज अनन्तदेव ने उचित नहीं समझा, अतः वे वहाँ से बिना युद्ध किये ही लौट आये ।

*English trans* : That great devotee of Lord Shiva went to capture Alaka the capita! of Kuber. There he saw his glory in the form of a female goose swimming in the Manas-lake with golden swans. Then he suddenly remembered that Kuber is a great friend of Lord Shiva. So he returned from there without capturing Alaka though it was almost in his possession.

कैलासाद्रिं दशमुखकरोत्तोलितं वीक्ष्य वीरो
नागाद् बाहुद्वयमपि वहन् विस्मयं लेशमात्रम् ।
औदासीन्य भुजविटपिनां छेदने तस्य यातं
देव्याः सूनोर्भृगुकुलपतेर्यः कुठारं निनिन्द ।। २३ ।।

**अन्वयः**—यः वीरः दशमुखकरोत्तोलितं कैलासाद्रिं वीक्ष्य बाहुद्वयमपि वहन् लेशमात्रं विस्मयं न अगात् । तस्य भुजविटपिनां छेदने औदासीन्यं यातं देव्याः सूनोः भृगुकुलपतेः कुठारं निनिन्द ।

**व्याख्या**—कैलासाद्रिमिति । यः वीरः अनन्तदेवः, दशमुखस्य रावणस्य करैः विंशत्या हस्तैः उत्तोलितम् उद्धृतम्, कैलासाद्रिं कैलासपर्वतं, वीक्ष्य दृष्ट्वा, बाहुद्वयमपि वहन्, भुजद्वयसहितोऽपि सन्, लेशमात्रम् अल्पमपि, विस्मयम् आश्चर्यं, न अगात् न प्राप । 'इणो गा लुङि' इति इणो गादेशः । रावणः विंशतिभुजैः कैलासम् उच्चिक्षेप अहं तु बाहुद्वयेनैव तत्कर्तुं प्रभवामीति निश्चित्य विस्मयं न प्राप । तस्य रावणस्य, भुजविटपिनां भुजरूपाणां तरूणां, 'विटपी पादपस्तरुः' इत्यमरः । छेदने औदासीन्यं विमुखत्वं यातम् । देव्याः भवान्याः, सूनोः धर्मपुत्रस्य, भृगुकुलपतेः परशुरामस्य, कुठारं परशुं, निनिन्द निन्दितवान् । समर्थोऽपि भार्गवः रावणस्य भुजच्छेदं न चकारेति तस्य कुठारं निनिन्द । तथा चोक्तं प्रसन्नराघवे–'यः कर्तार्जुनभूरुहाद्भुतभुजाशाखासहस्रच्छिदां दम्भोलेर्गिरिकूटपाटनपटोः शौण्डीर्यतो लज्जते । तस्यैतस्य परेतराजसदनद्वारः कुठारस्य मे का श्लाघा दशकण्ठकण्ठकदलीकाण्डावलीखण्डने' ।। इति ।

**हिन्दी**—उस वीरपुरुष महाराज अनन्तदेव को स्वयं दो हाथ होने पर भी रावण के हाथों से उठाये गये कैलास पर्वत को देखकर थोड़ा भी आश्चर्य नहीं हुआ, किन्तु ऐसा दुष्कृत्य करने वाले उसके भुजा रूपी वृक्षों का छेदन करने में उदासीनता दिखलाने वाले परशुराम के कुठार की उन्होंने निन्दा की ।

*English trans* **:** He was not in the least surprised though he himself has only two arms to see the Kailas mountain which had been once lifted by Ravan with his twenty arms. But he condemned the hatchet of lord Parshuram the son of goddess Bhawani because it had been indifferent in cutting into pieces the arms in the form of trees of Ravan in punishment for that insult.

जित्वा हूणान् समरनिपुणान् चण्डदोर्दण्डयुक्तान्
क्षोणीभर्तुः शिबिरवसतौ वङ्क्षुतीरे स्थितस्य ।
कृत्वा क्रीडां स्रुतमदजलाः सिन्धुरा यस्य मत्ताः
सिन्धोस्तस्या विदधुरुदकं पङ्किलं सङ्कुलं च ॥ २४ ॥

**अन्वयः**—समरनिपुणान् चण्डदोर्दण्डयुक्तान् हूणान् जित्वा वङ्क्षुतीरे शिबिरवसतौ स्थितस्य यस्य क्षोणीभर्तुः स्रुतमदजलाः मत्ताः सिन्धुराः क्रीडां कृत्वा तस्याः सिन्धोः उदकं पङ्किलं सङ्कुलं च विदधुः ।

**व्याख्या**—जित्वेति । समरे युद्धे, निपुणान् प्रवीणान्, चण्डौ बलिष्ठौ दोर्दण्डौ दण्डाकारौ बाहू ताभ्यां युक्तान्, हूणान् म्लेच्छविशेषान्, जित्वा पराभूय, वङ्क्षोः तदाख्यनद्याः, तीरे तटे, शिबिरवसतौ सेनानिवेशे, स्थितस्य यस्य क्षोणीभर्तुः राज्ञः अनन्तदेवस्य, स्रुतं गलितं मदजलं दानोदकं येषां ते, मत्ताः क्षीबाः, 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' इति निपातितः । सिन्धुराः गजाः, क्रीडां विहारं, कृत्वा विधाय, तस्याः सिन्धोः वङ्क्षुनद्याः, उदकं जलं, पङ्किलं पङ्कयुक्तं, सङ्कुलं क्षुभितं सङ्कीर्णं च, 'सङ्कीर्णे सङ्कुलाकीर्णे' इत्यमरः । विदधुः चक्रुः ।

**हिन्दी**—युद्ध में निपुण, प्रचण्ड भुजदण्डों वाले हूणों को पराजित कर वंक्षुनदी के तीर पर शिविर में रहते समय मद को चुआने वाले उस राजा के मदमत्त हाथियों ने उस नदी में क्रीडा करके उसके जल को क्षुब्ध तथा मलिन कर डाला ।

*English trans* : Having conquered the Hunas who are great warriors and very strong, that king made his camp on the bank of river Vankshu. There his elephants in rut having sported in the water of that river made it muddy and disordered.

श्रीमन्मुञ्जक्षितिपतिसमो भूषणं भूतधात्र्या-
स्त्राता वर्णाश्रमपथजुषां संविधाता क्रतूनाम् ।
हर्ता सद्यः प्रणतविपदामर्थिनां कल्पवृक्षो
लोके कस्य श्रवणपदवीं नाऽऽगतोऽनन्तदेवः ।। २५ ।।

**अन्वयः**—श्रीमन्मुञ्जक्षितिपतिसमः भूतधात्र्याः भूषणं वर्णाश्रमपथजुषां त्राता, क्रतूनां संविधाता, प्रणतविपदां सद्यः हर्ता, अर्थिनां कल्पवृक्षः अनन्तदेवः लोके कस्य श्रवणपदवीं न आगतः ।

**व्याख्या**—श्रीमन्निति । श्रीमान् ऐश्वर्यसम्पन्नः यः मुञ्जः क्षितिपतिः राजा तेन समः सदृशः, भूतधात्र्याः जगत्याः, 'भूतधात्री रत्नगर्भा जगती सागराम्बरा' इत्यमरः । भूषणमलङ्कारः, वर्णाश्रमपथजुषां वर्णाश्रमधर्मपालनतत्पराणां त्राता रक्षणकर्ता, क्रतूनां यज्ञानां, संविधाता कर्ता, सद्यः तत्क्षणे, प्रणतानां शरणागतानां, विपदां विपत्तीनां, हर्ता नाशकः, अर्थिनां याचकानाम्, 'मार्गणो याचकार्थिनौ' इत्यमरः । कल्पवृक्षः अभीष्टफलदः, अनन्तदेवः लोके जगति, कस्य श्रवणपदवीं कर्णपथं न आगतः न प्राप्तः । सर्वेऽपि तं जानन्तीति काक्वा व्यज्यते । अत्र उदात्तालङ्कारः ।

**हिन्दी**—श्रीमान् मुञ्जदेव महाराज के समान पृथ्वी के भूषण-स्वरूप, वर्णाश्रम धर्म के मार्ग पर चलने वालों की रक्षा करने वाले, यज्ञों को करनेवाले, शरण में आये हुए लोगों की विपत्ति को तत्काल दूर करने वाले और याचकों के लिए कल्पवृक्ष के समान उस महाराज अनन्तदेव का नाम किसने नहीं सुना है ?

अर्थात् ये अपने लोकोत्तर गुणों और सत्कर्मों के कारण विश्वविश्रुत थे ।

*English trans* : He is like the great king Munja an ornament of the earth. He is the protector of those who follow the Varnashrama Dharma. He is the performer of sacrifices. He instantly removes the calamities of those who approach him. He is a divine tree itself for the suitors. Who has not heard the name of king Anantdeva ?

क्षेमेन्द्राद्याः प्रवरकवयो यत्सभामाश्रयन्ते
दत्ता येन प्रतिदिशमथो विस्फुरन्त्यग्रहाराः ।
गायन्त्युच्चैस्तुहिनधवलं यद्यशः शालिगोप्यः
काश्मीराणां भवति नृपतिः सोऽधुनाऽनन्तदेवः ।। २६ ।।

**अन्वयः**—क्षेमेन्द्राद्याः प्रवरकवयः यत्सभाम् आश्रयन्ते । अथो येन दत्ताः अग्रहाराः प्रतिदिशं विस्फुरन्ति । शालिगोप्यः तुहिनधवलं यद्यशः उच्चैः गायन्ति । सः अनन्तदेवः अधुना काश्मीराणां नृपतिः भवति ।

**व्याख्या**—क्षेमेन्द्राद्या इति । क्षेमेन्द्रः आद्यः मुख्यः येषां ते, प्रवराः कवयः प्रवरकवयः श्रेष्ठकवयः, यस्य अनन्तदेवस्य, सभाम् आश्रयन्ते । अथो अथ च, येन दत्ताः वितीर्णाः, अग्रहाराः प्रतिदिशं दिशि दिशि, विस्फुरन्ति शोभन्ते । शालिगोप्यः क्षेत्रे शालीनां सस्यानां रक्षणार्थं नियुक्ताः स्त्रियः, तुहिनमिव हिममिव, धवलं शुभ्र, यस्य अनन्तदेवस्य यशः कीर्तिम्, उच्चैः तारस्वरेण, गायन्ति । सः अनन्तदेवः, अधुना इदानीं, काश्मीराणां नृपतिः राजा, भवति अस्ति ।

**हिन्दी**—क्षेमेन्द्र आदि कविवर जिनकी राजसभा में विराजमान हैं, जिनके द्वारा ब्राह्मणों को दिये गये अग्रहार प्रत्येक दिशा में पाये जाते हैं । धानों की देख-रेख करनेवाली कृपकों की स्त्रियाँ जिनके हिमधवल सुयश का उच्चस्वरों में गान किया करती हैं, ऐसे महाराज अनन्तदेव इस समय काश्मीरदेश पर शासन कर रहे हैं ।

*English trans* : Great poets like Kshemendra are in his court. There are agraharas given by him in every part of the country. The female guardians of the rice-fields sing in high tune his glory which is as bright as the snow. At this time Anantdeva is the king of Kashmir.

तस्याऽमात्यो हलधर इति ख्यातनामा वदान्यो
मान्यो लोके सुरगुरुसमः शम्भुभक्तस्त्वनन्यः।
भ्राता तस्य श्रुतिधर इति प्रीतिपात्रं यवीयान्
प्रेष्ठं तस्य क्षितिधर इति त्वं सुतं मामवेहि ॥ २७ ॥

**अन्वयः**—तस्य वदान्यः लोके सुरगुरुसमः मान्यः अनन्यः शम्भुभक्तः हलधर इति ख्यातनामा अमात्यः अस्ति । तस्य प्रीतिपात्रं यवीयान् भ्राता श्रुति-धर इति अस्ति । त्वं तस्य प्रेष्ठं सुतं क्षितिधर इति माम् अवेहि ।

**व्याख्या**—तस्येति । तस्य अनन्तदेवस्य, वदान्यः उदारः, 'स्युर्वदान्यस्थूल-लक्षदानशौण्डा बहुप्रदे' इत्यमरः । लोके पृथिव्यां, सुरगुरुः बृहस्पतिः तत्समः तत्तुल्यः, मान्यः आदरणीयः, अनन्यः असाधारणः, शम्भोः शिवस्य, भक्तः हलधर इति ख्यातं प्रसिद्धं नाम यस्य सः, अमात्यः मन्त्री, अस्तीति शेषः । तस्य हलधरस्य, प्रीतिपात्रं स्नेहभाजनं, यवीयान् कनीयान्, भ्राता बन्धुः, श्रुतिधरनामधेयः, अस्तीति शेषः । त्वं तस्य श्रुतिधरस्य, प्रेष्ठं प्रियतमं, सुतं पुत्रं, क्षितिधर इति क्षितिधरनामानं, माम् अवेहि जानीहि ।

**हिन्दी**—उन( अनन्तदेव )के उदारचरित लोगों में बृहस्पति के समान सम्मान को प्राप्त, अनन्य शिवभक्त हलधर नाम से प्रसिद्ध मन्त्री हैं । उनके अत्यन्त लाडले श्रुतिधर नाम के छोटे भाई हैं । मैं उन( श्रुतिधर )का अत्यधिक प्रिय क्षितिधर नाम का पुत्र हूँ ।

*English trans* : His chief minister is called Haladhara who is famous for his generosity and a unique devotee of lord Shiva. He is respected by people like Bruhaspati. Shrutidhara is the beloved younger brother of Haladhara. I am Kshitidhara dear-est son of Shrutidhara.

तत्रोत्तुङ्गं प्रवरनगरे मन्दिरं शूलपाणे-
रस्ति स्वच्छस्फटिकघटितं क्लृप्तकैलाससख्यम् ।
यन्निर्माय प्रवरनृपतिर्लोभनं लोचनानां
कृत्वा रन्ध्रं दिवमुपययौ ध्यानमग्नः सदेहः ॥ २८ ॥

**अन्वयः**—तत्र उत्तुङ्गं स्वच्छस्फटिकघटितं क्लृप्तकैलाससख्यं शूलपाणेः मन्दिरम् अस्ति । प्रवरनृपतिः लोचनानां लोभनं यत् निर्माय ध्यानमग्नः रन्ध्रं कृत्वा सदेहः दिवम् उपययौ ।

**व्याख्या**—तत्रेति । तत्र प्रवरनगरे, उत्तुङ्गम् उन्नतम्, स्वच्छैः धवलैः स्फटिकैः स्फटिकमणिभिः घटितं निर्मितं, क्लृप्तं कृतं, कैलासस्य शिवनिवास-स्थानस्य कैलासपर्वतस्य, सख्यं साम्यं येन तत्, कैलासपर्वतसदृशमित्यर्थः । शूलपाणेः शिवस्य, मन्दिरम् आयतनम्, अस्ति । प्रवरनृपतिः काश्मीराधिपतिः महाराजः प्रवरसेनः, लोचनानां नेत्राणां लोभनम् आह्लादकम्, यत् मन्दिरं, निर्माय विधाय, ध्यानमग्नः समाधिमग्नः, रन्ध्रं छिद्रं कृत्वा, सदेहः सशरीरः, दिवं स्वर्गम्, उपययौ जगाम ।

**हिन्दी**—उस प्रवरनगर में बहुत ऊँचा स्वच्छ स्फटिक-शिलाओं द्वारा बनाया गया कैलास पर्वत के सदृश भगवान् शिवजी का मन्दिर है । महाराज प्रवरसेन ने समस्त दर्शकों की आँखों को अपनी ओर आकृष्ट करनेवाले मन्दिर का निर्माण कराया, तदनन्तर भगवान् शिव के ध्यान में मग्न होकर छिद्र करके सदेह स्वर्ग को चले गये ।

*English trans* : There in Pravarnagar is a lofty temple of lord Shiva built with pure white marble. It resembles the Kailas mountain, king Pravarsen constructed that temple and went to heaven absorbed in meditation along with his body making a hole in the ceiling.

तस्याऽऽसन्नः स्थलकमलिनीवाटिकोद्घाटितश्रीः
प्रासादो मे भवति कुशलैः कारितस्तातपादैः ।
नक्तं यस्मिन् वलभिशिखरे रत्नदीपान् दधानाः
स्वर्गस्त्रीणां भ्रममनुकलं कुर्वते शालभञ्ज्यः ।। २९ ।।

**अन्वयः**—तस्य आसन्नः मे तातपादैः कुशलैः कारितः स्थलकमलिनी-वाटिकोद्घाटितश्रीः प्रासादः भवति । यस्मिन् नक्तं वलभिशिखरे रत्नदीपान् दधानाः शालभञ्ज्यः अनुकलं स्वर्गस्त्रीणां भ्रमं कुर्वते ।

**व्याख्या**—तस्येति । तस्य शिवमन्दिरस्य, आसन्नः समीपवर्ती, 'समीपे निकटासन्नसन्निकृष्टसनीडवत्' इत्यमरः । मे मम, तातपादैः पितृचरणैः, कुशलैः कारुभिः, कारितः निर्मापितः, स्थलकमलिनीनां गुलाबपुष्पलतानां, वाटिकया उपवनेन उद्घाटिता प्रवर्धिता श्रीः शोभा यस्य सः, प्रासादः सौधः, भवति अस्ति । यस्मिन् प्रासादे, नक्तं रात्रौ, वलभेः चन्द्रशालायाः, शिखरे अग्रभागे, रत्नदीपान् मणिमयप्रदीपान्; दधानाः धारयन्त्यः, शालभञ्ज्यः पुत्तलिकाः, अनुकलं प्रतिक्षणं, स्वर्गस्त्रीणां देवाङ्गनानाम्, भ्रमं भ्रान्ति, कुर्वते कुर्वन्ति । याः विलोक्य जनाः 'देवाङ्गनाः इमाः' इति मन्यन्ते । अत्र भ्रान्तिमान् अलङ्कारः ।

**हिन्दी**—उस शिव-मन्दिर के समीप मेरे ( श्रुतिधर के ) पिता जी की आज्ञा से कुशल शिल्पियों द्वारा बनाया हुआ एक प्रासाद है । जिसकी शोभा समीप में लगाये हुए गुलाब के उद्यान से बढ़ गयी है, रात्रि के समय उस प्रासाद की चन्द्रशाला में रत्नदीप को हाथ में ली हुई पुत्तलियाँ दूर से देखने-वालों को स्वर्ग की स्त्रियों का भ्रम पैदा करती रहती हैं ।

*English trans* : Adjacent to that temple is my father's mansion, constructed by skilful artisans with a beautiful rose garden on the front side. There the female statues on the top of the mansion with jewel-lamps in their hands appear like celestial damsels in the night.

तस्य द्वारे कनककदलीस्तम्भविभ्राजमाने
राजत्याम्रद्रुमकिसलयै राजतं कुम्भयुग्मम् ।
वेल्लत्यूर्ध्वं ग्रथितमखिलैस्तोरणं नारिकेलैः
सिद्धं किञ्चिन्मुकुलितकरं स्वागतायाऽऽगतानाम् ।। ३० ।।

**अन्वयः**—कनककदलीस्तम्भविभ्राजमाने तस्य द्वारे राजतं कुम्भयुग्मम् आम्रद्रुमकिसलयैः राजति । ऊर्ध्वम् अखिलैः नारिकेलैः ग्रथितम् आगतानां स्वागताय किञ्चिन्मुकुलितकरं सिद्धं तोरणं वेल्लति ।

**व्याख्या**—तस्येति । कनककदलीस्तम्भैः कदलीविशेषस्तम्भैः विभ्राजमाने शोभमाने, तस्य प्रासादस्य द्वारे, राजतं रजतनिर्मितम्, 'प्राणिरजतादिभ्योऽञ्' इत्यञ् । कुम्भयुग्मं कलशद्वयम्, आम्रद्रुमस्य आम्रवृक्षस्य किसलयैः पल्लवैः, 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । राजते दीप्यते । ऊर्ध्वं द्वारस्य ऊर्ध्वभागे, अखिलैः अखण्डैः, नारिकेलैः ग्रथितं गुम्फितम्, आगतानां स्वागताय सभाजनाय, किञ्चिन्मुकुलितौ करौ येन तत् बद्धाञ्जलि, तोरणं वेल्लति लम्बते । अत्र उत्प्रेक्षालङ्कारः ।

**हिन्दी**—राजमहल के दोनों ओर सुवर्णमय केले के खम्भों से सुशोभित द्वारप्रदेश में आम के पल्लवों से युक्त चाँदी के दो मंगल कलश शोभा दे रहे हैं । द्वार के ऊपरी भाग में सम्पूर्ण नारियलों से बनाया हुआ तोरण आनेवाले लोगों का स्वागत करने के लिए मानों दोनों हाथों को जोड़कर खड़ा लटक रहा है ।

*English trans* : It's entrance is decorated with beautiful columns of plantain. A pair of silver pitchers is placed at the entrance with tender shoots of mango tree. An ornamental arch of whole cocoanuts strung together dangles over the door as if ready with folded hands to receive the guests.

आस्ते तस्मिन् महदुपवनं केतकैः क्लृप्तसीमं
वैभ्राजस्य प्रतिकृतिरिव प्राप्तवृन्दावनश्रि।
चिन्वन् यस्मिन् कुसुमनिकरं निर्भरं पञ्चबाण-
स्तूणं जेतुं निखिलभुवनान्यक्षयं संविधत्ते ॥ ३१ ॥

**अन्वयः**—तस्मिन् केतकैः क्लृप्तसीमं वैभ्राजस्य प्रतिकृतिः इव प्राप्त-वृन्दावनश्रि महत् उपवनम् आस्ते। यस्मिन् निर्भरं कुसुमनिकरं चिन्वन् पञ्च-बाणः निखिलभुवनानि जेतुं तूणम् अक्षयं संविधत्ते।

**व्याख्या**—आस्ते इति। तस्मिन् प्रासादे, केतकैः क्लृप्ता कृता सीमा वृतिः यस्य तत्, सकण्टकैः केतकैः प्रायः उपवनस्य वृतिः क्रियते। येन तत्र पश्वादीनां प्रवेशो न सम्भवति। वैभ्राजस्य कुबेरोद्यानस्य चैत्ररथस्य, प्रतिकृतिः प्रतिमान-मिव स्थितम्, 'विभ्राजेन गणेन्द्रेण जातं वैभ्राजमाख्यया' इति शम्भुरहस्ये। 'प्रतिमानं प्रतिबिम्बं प्रतिमाप्रतियातना प्रतिच्छाया, प्रतिकृतिरर्चा' इत्यमरः। प्राप्ता वृन्दावनस्य श्रीः शोभा येन तत्, वृन्दावनतुल्यमित्यर्थः। महत् विशालम्, उपवनम् उद्यानम्, आस्ते। यस्मिन् उपवने, निर्भरम् अत्यन्तम्, कुसुमानां पुष्पाणाम्, निकरं निचयम्, चिन्वन् सङ्गृह्णन्, पञ्चबाणः मदनः, निखिलानि सकलानि भुवनानि जगन्ति, चतुर्दश भुवनानि प्रसिद्धानि, जेतुं वशीकर्तुम्, तूणं तूणीरम्, 'तूणोपासङ्गतूणीर' इत्यमरः। अक्षयम् अविद्यमानः क्षयः नाशः यस्य तम्, सर्वदा परिपूर्णमित्यर्थः। संविधत्ते करोति। पूर्वं कामस्य केवलं पञ्चबाणा आसन्, अत्र कुसुमानि चित्वा स स्वतूणीरं बाणैः परिपूर्णं करोतीत्यर्थः।

**हिन्दी**—वहाँ एक विशाल उपवन है, जिसकी चहारदिवारी केवड़े के झाड़ों से बनायी गयी है। यह उपवन कुबेर के बगीचे जैसा परमरमणीय लगता है और यह वृन्दावन की शोभा को धारण करता है। इसमें से कामदेव असंख्य फूलों को चुनकर अपने तरकस को भर लेता है, जिससे वह चौदहों भुवनों को जीत सके।

*English trans* : There is a large garden in the mansion with a border of Ketak plants. It is beautiful like Vrundavan and a substitute of Chaitra-ratha, cupid gathers numerous flowers there and makes his quiver imperishable to conquer all the world.

बद्धा तत्र स्फटिकमणिभिर्दीर्घिका चन्द्रकान्तैः
पद्मैः पूर्णा दशशतदलैः पुण्डरीकैः प्रफुल्लैः ।
कृत्वा क्रीडां पयसि पुलिने राजहंसान् प्रसुप्तान्
यत्र प्रीत्या मधुररणितैः षट्पदा बोधयन्ति ।। ३२ ।।

**अन्वयः**—तत्र चन्द्रकान्तैः स्फटिकमणिभिः बद्धा दशशतदलैः पद्मैः, प्रफुल्लैः पुण्डरीकैः पूर्णा दीर्घिका अस्ति । यत्र पयसि क्रीडां कृत्वा पुलिने प्रसुप्तान् राजहंसान् षट्पदाः प्रीत्या मधुररणितैः बोधयन्ति ।

**व्याख्या**—बद्धेति । तत्र उपवने, चन्द्रकान्तैः चन्द्र इव कान्तैः सुन्दरैः, 'उपमानानि सामान्यवचनैः' इति समासः । स्फटिकमणिभिः बद्धा निर्मिता, दशशतदलैः सहस्रपत्रैः पद्मैः कमलैः, प्रफुल्लैः विकसितैः, पुण्डरीकैः, सिताम्भोजैः, 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । पूर्णा दीर्घिका वापी अस्तीति शेषः, 'वापी तु दीर्घिका' इत्यमरः । यत्र वाप्यां, पयसि जले, क्रीडां केलिं, कृत्वा विधाय, पुलिने तीरे, प्रसुप्तान् निद्राणान्, राजहंसान् षट्पदा भ्रमराः, प्रीत्या साहचर्यजन्यस्नेहात्, मधुररणितैः मधुरशब्दैः, बोधयन्ति जागरयन्ति । यथा मागधाः प्रातःकाले स्तुतिपाठैः नृपतीन् बोधयन्ति तथा भ्रमरा राजहंसान् बोधयन्ति । राजपक्षे राजानः हंसाः इव राजहंसा इति विग्रहः 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः ।

**हिन्दी**—वहाँ चन्द्रमा के सदृश स्वच्छ एवं सुन्दर स्फटिकमणियों से बनायी हुई, खिले हुए सहस्रदलकमलों और सफेद कमलों से भरी बावड़ी है, जिसके जल में क्रीड़ा करके तट पर सोये हुए राजहंसों को भौंरे अपनी मधुर गुनगुनाहट सुनाकर प्रेम से जगा रहे हैं ।

*English trans* **:** There is a swimming pool built with white marble beautiful like the moon. It is full of lotuses with thousand petals and blooming white lilies. The swans sport in the pool and sleep on it's bank. The bees rouse them from sleep affectionately by their sweet humming.

तत्राऽऽवासा मणिमयभुवः प्राणिनां गृह्यकाणां
यत्र स्वैरं तरुणहरिणाः पल्लवानुल्लुनन्ति ।
व्याधुन्वानो भ्रमति चमरश्चामरं वालहस्तं
सान्द्रं दूर्वाङ्कुरमुपतटं कृष्णसाराश्चरन्ति ।। ३३ ।।

**अन्वयः**—तत्र गृह्यकाणां प्राणिनाम् आवासाः मणिमयभुवः सन्ति । यत्र तरुणहरिणाः स्वैरं पल्लवान् उल्लुनन्ति । वालहस्तं चामरं व्याधुन्वानः चमरः भ्रमति । कृष्णसाराः उपतटं सान्द्रं दूर्वाङ्कुरं चरन्ति ।

**व्याख्या**—तत्रेति । तत्र उपवने, गृह्यकाणां गृहे पालितानाम्, 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः । 'पदास्वैरिबाह्यापक्ष्येषु च' इति सूत्रेण ग्रहधातोः क्यप्प्रत्यये गृह्यशब्दः तस्मात् स्वार्थे कः । प्राणिनां हरिणादीनाम्, आवासाः निवासाः, मणिमयभुवः सन्ति । यत्र तरुणहरिणाः पल्लवान् उल्लुनन्ति छिन्दन्ति । वालहस्तं पुच्छाग्रभागम्, 'पुच्छोऽस्त्री लोमलाङ्गूले वालहस्तश्च वालधिः' इत्यमरः । व्याधुन्वानः भ्रामयन्, चमरः मृगविशेषः, भ्रमति इतस्ततः चरति । कृष्णसाराः मृगविशेषाः, उपतटं दीर्घिकातटसमीपे, सान्द्रं घनम्, दूर्वाङ्कुरं चरन्ति भक्षयन्ति । चरतिर्गतौ भक्षणे च वर्तते, 'घनं निरन्तरं सान्द्रम्' इत्यमरः ।

**हिन्दी**—उस प्रासाद में पालतू प्राणियों के लिए घर बनाये गये हैं, जिनके फर्श मणियों से निर्मित हैं । वहाँ हिरनों के बच्चे अपनी इच्छा से नवकिसलयों को चबाते हैं । चमरमृग अपना पुच्छरूपी चँवर हिलाता हुआ इधर-उधर घूम रहा है और कृष्णसार मृग बावड़ी के किनारे पर उगी हुई घनी दूब की पत्तियों को चर रहे हैं ।

*English trans* : There are habitations having floor inlaid with jewels for the tame animals. There the young antelopes pluck the tender shoots at perfect ease, The chamar deer moves about shaking his hairy tail. The spotted antelopes graze the soft blade of Durva grass near the bank.

कीरा धीरा विदधति सुखं काव्यशास्त्रे विनोदं
कर्णे कुर्वन्त्यमृतविसरं सारिका मञ्जुघोषाः ।
तत्राऽऽधत्ते परभृतकुलं काकलीं सर्वकालं
सङ्क्रीडन्ते सह सहचरैः सारसाः सारसेषु ।। ३४ ।।

**अन्वयः**—तत्र धीराः कीराः सुखं काव्यशास्त्रे विनोदं विदधति । मञ्जुघोषाः सारिकाः कर्णे अमृतविसरं कुर्वन्ति । परभृतकुलं सर्वकालं काकलीम् आधत्ते । सारसाः सहचरैः सह सारसेषु सङ्क्रीडन्ते ।

**व्याख्या**—कीरा इति । तत्र उपवने, धीराः प्राज्ञाः, 'धीरो मनीषी ज्ञः प्राज्ञः सङ्ख्यावान् पण्डितः कविः' इत्यमरः । कीराः शुकाः, सुखं सुखेन, काव्यं च शास्त्राणि च तेषां समाहारः काव्यशास्त्रं तस्मिन्, विनोदं मनोरञ्जनं, कुर्वन्ति । परभृतानां कोकिलानां, कुलं यूथं, 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम्' इत्यमरः । सर्वकालं वसन्तकालं विनाऽपि, काकलीं मधुरध्वनिम्, आधत्ते करोति । 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इत्यमरः । मञ्जुः मञ्जुलः घोषः शब्दः यासां ताः सारिकाः, कर्णे श्रवणे, अमृतस्य विसरं सेकं कुर्वन्ति । सारसाः जलनिवासिनः पक्षिविशेषाः, 'पुष्कराह्वस्तु सारसः' इत्यमरः । सहचरैः सुहृद्भिः, सह सारसेषु कमलेषु, 'सारसं सरसीरुहम्' इत्यमरः । सङ्क्रीडन्ते खेलन्ति, 'क्रीडोऽनुसम्परिभ्यश्च' इत्यात्मनेपदम् ।

**हिन्दी**—वहाँ शास्त्रचतुर तोते सुखपूर्वक काव्य तथा शास्त्र से सम्बन्धित चर्चाओं द्वारा परस्पर मनोविनोद किया करते हैं । मधुरस्वर वाली मैनाएँ मानों कानों में अमृतरस को बरसाती है । कोयलें सभी ऋतुओं में मधुर-कूजन करती रहती हैं और सारसपक्षी अपने साथियों के साथ कमलों के बीच में विहार किया करते हैं ।

*English trans* : The learned parrots there, amuse themselves discussing poetics and other sciences. The Sarikas with sweet voice pour nectar in the ears of the listeners. The cuckoos sing in sweet tune all the year and the cranes enjoy playing with their companions in clusters of lotuses.

यातायातं भवति पुरतः सन्ततं वाहनानां
सन्तिष्ठन्ते प्रहरणधरा यामिका द्वारदेशे ।
प्रातःसायं मदनजयिनस्तत्र पूजाप्रसङ्गे
श्रोत्रद्वन्द्वं सुखयति नृणां मङ्गलस्तूर्यनादः ।। ३५ ।।

**अन्वयः**—तत्र पुरतः वाहनानां सन्ततं यातायातं भवति । द्वारदेशे प्रहरणधराः यामिकाः सन्तिष्ठन्ते । मदनजयिनः प्रातःसायं पूजाप्रसङ्गे मङ्गलः तूर्यनादः नृणां श्रोत्रद्वन्द्वं सुखयति ।

**व्याख्या**—यातायातमिति । तत्र प्रासादे, पुरः पुरस्तात्, सन्ततं नित्यम्, वाहनानां गजतुरगशिबिकादीनां, यातायातं गमनागमनं भवति, अर्थात् प्रत्यहं जना वाहनेषु आरुह्य आगच्छन्ति गच्छन्ति च । द्वारदेशे प्रतीहारे, प्रहरणधराः शस्त्रधारिणः, यामिकाः प्रहरिणः, सन्तिष्ठन्ते । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । मदनजयिनः शिवस्य, प्रातःसायं पूजाप्रसङ्गे मङ्गलः माङ्गलिकः, तूर्यस्य वाद्यविशेषस्य, नादः शब्दः, नृणां जनानां, श्रोत्रद्वन्द्वं श्रवणयुगलं, सुखयति आनन्दयति ।

**हिन्दी**—उस प्रासाद के सामने सदैव विविध प्रकार के वाहनों का आवागमन होता रहता है । उसके दरवाजे पर शस्त्रधारण किये हुए पहरेदार प्रतिक्षण सावधान होकर खड़े रहते हैं । वहाँ प्रातः-सायं भगवान् शिव की पूजा के समय बजने वाली शहनाई की मांगलिक एवं मधुर ध्वनि सुनने वालों के कानों को सुख देती रहती है ।

*English trans* : There is always heavy traffic on the front side. Armed guards are posted at the entrance. At the morning and evening worship of lord Shiva the sweet sound of shahanai delights the listeners.

एभिर्बन्धो ! स्फुटमभिहितैर्लक्षणैर्लक्षणीयं
ज्ञातुं तत्र प्रभवति भवान् मन्दिरं तन्मदीयम् ।
गन्तव्यं द्विप्रहरविरतौ तत्र जाते विविक्ते
सँल्लापे यज्जलद ! भवता शक्नुयाद् वल्लभा मे ।। ३६ ।।

**अन्वयः**—हे बन्धो ! जलद ! स्फुटम् अभिहितैः एभिः लक्षणैः लक्षणीयं तत् मदीयं मन्दिरं भवान् तत्र ज्ञातुं प्रभवति । द्विप्रहरविरतौ विविक्ते जाते तत्र गन्तव्यम् । यत् मे वल्लभा भवता सँल्लापे शक्नुयात् ।

**व्याख्या**—एभिरिति । हे बन्धो ! जलद ! स्फुटं स्पष्टम्, अभिहितैः कथितैः, एभिः उपरि निर्दिष्टैः, लक्षणैः चिह्नैः, लक्षणीयं ज्ञेयं, तत् मदीयं मम, मन्दिरं भवनम्, भवान् तत्र प्रवरनगरे, ज्ञातुं निश्चेतुम्, प्रभवति समर्थो भविष्यति । द्विप्रहरविरतौ द्विप्रहरावसाने, विविक्ते विजने, 'विविक्तौ पूतविजनौ' इत्यमरः । जाते, तत्र मम भवने गन्तव्यम्, यत् यस्मात्, तदा मे वल्लभा पत्नी, गृहकार्यान्निवृत्ता, भवता सह सँल्लापे मिथो भाषणे, 'सँल्लापो भाषणं मिथः' इत्यमरः । शक्नुयात् शक्ष्यतीत्याशयः ।

**हिन्दी**—भाई मेघ ! इस प्रकार स्पष्ट रूप से बतलाये गये लक्षणों से आप प्रवरनगर में जाकर मेरे घर को पहचान सकोगे । दोपहर के बाद ही आप मेरे घर पर जाना, तब तक मेरी पत्नी घर के काम-काज से खाली होकर आपसे बातचीत कर सकेगी ।

*English trans :* Oh brother cloud ! I have clearly mentioned the characteristics of my house. By these you can easily find it there. Please go there in the afternoon when it is secluded. So that my dear wife can be able to talk with you.

नार्हस्येव त्वमपरिचितो द्वारदेशात् प्रवेशं
कुर्युः सद्यस्तव पथि यतो यामिकाः सन्निरोधम् ।
सामन्तानां सदसि नृपतेर्नूनमस्मादृशाना-
मन्तर्गेहं गतिरसुलभा नूतनागन्तुकस्य ॥ ३७ ॥

**अन्वयः**—अपरिचितः त्वं द्वारदेशात् प्रवेशं न एव अर्हसि । यतः यामिकाः पथि तव सद्यः सन्निरोधं कुर्युः । नूनं नृपतेः सदसि सामन्तानाम् अस्मादृशानाम् अन्तर्गेहं नूतनागन्तुकस्य गतिः असुलभा ।

**व्याख्या**—नार्हस्येवेति । अपरिचितः त्वं द्वारदेशात् अस्मद् गृहे प्रवेशं नैव अर्हसि प्राप्स्यसि, यतः यस्मात्, अथवा यतः गच्छतः । इण्धातोः शतृप्रत्यये रूपम् । यामिकाः प्रहरिणः, पथि मार्गे, तव सद्यः तत्क्षणे, सन्निरोधं प्रतिबन्धम्, कुर्युः करिष्यन्ति । नूनं निश्चयेन, नृपतेः राज्ञः, सदसि सभायां, सामन्तानाम् अस्मादृशानाम्, अन्तर्गेहं गेहे इति अन्तर्गेहम्, विभक्त्यर्थे अव्ययीभावः । नूतना-गन्तुकस्य अपरिचितस्य अभ्यागतस्य, गतिः गमनम् प्रवेश इत्यर्थः । असुलभा दुष्करा, अस्तीति शेषः ।

**हिन्दी**—अपरिचित होने के कारण तुम्हारा प्रवेश दरवाजे से न हो सकेगा, क्योंकि दरवाजे पर खड़े हुए पहरेदार तुमको भीतर जाने से सचमुच रोक देंगे । राजा के दरबार में, हम जैसे सरदारों के घरों में नये आये हुए ( अपरिचित ) व्यक्ति का सहसा प्रवेश पा जाना असम्भव-सा होता है ।

*English trans* : Being unknown, ofcourse you shall not be allowed to enter through the gate. Because the guards there will immediately obstruct you. Indeed it is very difficult for a stranger to enter the interior of the house of noblemen like us.

एत्याऽधस्ताद् द्रुतमुपगतः पार्श्वमट्टालिकाया
दृष्ट्वा बाष्पस्नपितनयनैः केकिभिः श्लाघ्यमानः ।
जालप्रान्तं शयनभवनस्याश्रयन् मत्प्रियाया
वीक्षस्वाऽन्तः क्षणरुचिमयीं निक्षिपन्नात्मदृष्टिम् ।। ३८ ।।

**अन्वयः**—अधस्तात् एत्य द्रुतम् अट्टालिकायाः पार्श्वम् उपगतः दृष्ट्वा बाष्पस्नपितनयनैः केकिभिः श्लाघ्यमानः मत्प्रियायाः शयनभवनस्य जालप्रान्तम् आश्रयन् क्षणरुचिमयीम् आत्मदृष्टिं निक्षिपन् अन्तः वीक्षस्व ।

**व्याख्या**—एत्येति । अधस्तात् गगनात् अधोभागे, एत्य आगत्य, द्रुतं शीघ्रम्, अट्टालिकायाः गृहस्य उपरिभूमेः, पार्श्वं समीपदेशम्, उपगतः प्राप्तः, दृष्ट्वा प्रेक्ष्य, बाष्पैः अश्रुभिः स्नपिते पूरिते नयने येषां तैः, केकिभिः मयूरैः, श्लाघ्यमानः केकारवैः सभाजितः, मम प्रियायाः पत्न्याः, शयनभवनस्य शयनमन्दिरस्य, जालप्रान्तं गवाक्षदेशं, 'जालं समूहआनायगवाक्षक्षारकेष्वपि' इत्यमरः । आश्रयन्, क्षणं रुचिः प्रभा यस्याः सा क्षणरुचिः विद्युत्, 'शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा । तडित्सौदामनी विद्युच्चञ्चला चपला अपि' । इत्यमरः । तन्मयीं तद्रूपाम्, आत्मनः स्वस्य दृष्टिं दृशं, निक्षिपन् अन्तः शयनभवनस्य अन्तर्भागे, वीक्षस्व पश्य ।

**हिन्दी**—इसलिये आकाश से कुछ नीचे की ओर आकर जल्दी से तुम दूसरी मंजिल के बगल में जाओ, आँसू भरे हुए नेत्रों से देखनेवाले मोर तुम्हारा स्वागत करेंगे । मेरी पत्नी के शयनमन्दिर की खिड़की का सहारा लेते हुए बिजलीरूपी अपनी दृष्टि से तुम अन्दर की ओर झाँकना ।

*English trans* : Come down hastily and approach the upper story. The peacocks in the house will be delighted to see you and receive you with tearful-eyes. Then clinging to the window of the bedroom of my wife, peep inside casting your glance in the form of lightning.

दक्षा पूजापरिकरविधौ श्रद्धया चन्द्रमौले:
सेवां पित्रोर्मम विदधती वृद्धयोर्भक्तिपूर्वम् ।
आतिथ्यादौ प्रकृतिनिपुणा वत्सला भृत्यवर्गे
मूर्ता लक्ष्मीर्गृहमुपगता भासते या कुलस्य ।। ३९ ।।

**अन्वयः**—चन्द्रमौलेः पूजापरिकरविधौ श्रद्धया दक्षा, वृद्धयोः मम पित्रोः भक्तिपूर्वं सेवां विदधती, आतिथ्यादौ प्रकृतिनिपुणा, भृत्यवर्गे वत्सला या गृहम् उपगता मूर्ता कुलस्य लक्ष्मीः भासते ।

**व्याख्या**—दक्षेति । चन्द्रमौलेः श्वशुरकुलदैवतस्य भगवतः शिवस्य । पूजायाः परिकरः सविस्तरः प्रकारः तस्य विधौ, अभिषेकचतुष्षष्ट्युपचार-पूर्वकपूजननैवेद्यसमर्पणादिक्रियाकलापे श्रद्धया दक्षा तत्परा । वृद्धयोः मम पित्रोः मातापित्रोः, 'पिता मात्रा' इत्येकशेषः । भक्तिपूर्वं न तु बलात्, सेवां शुश्रूषां, विदधती कुर्वाणा, आतिथ्यादौ प्राघुणकानां सत्कारादौ, प्रकृत्या स्वभावेनैव न तु शिक्षया निपुणा कुशला, भृत्यानां सेवकानां वर्गे समुदाये, एतेन श्वशुर-कुलस्यैश्वर्यं सूच्यते, वत्सला स्निग्धा, 'स्निग्धस्तु वत्सलः' इत्यमरः । या गृहम् उपगता प्राप्ता, मूर्ता मूर्तिमती शरीरिणीत्यर्थः, कुलस्य वंशस्य, लक्ष्मीः भासते शोभते ।

**हिन्दी**—अपने श्वशुर कुल के इष्टदेव भगवान् शिव की पूजाविधि में बड़ी श्रद्धा से तत्पर रहने वाली, मेरे वृद्ध माता-पिता की भक्ति से सेवा करने वाली, आये हुए लोगों के अतिथि सत्कार में स्वभाव से ही अत्यन्त कुशल और नौकरों के प्रति स्नेह करने वाली मेरी पत्नी घर में आयी हुई कुल की लक्ष्मी के समान शोभा पाती है ।

*English trans* : My wife is very attentive in minute arrangement of the worship of lord Shiva with devotion. She carefully looks after my aged father and mother. She is hospitable by nature and kind to the servants. It appears as if the goddess of prosperity has come to our house in her form.

वक्त्रं यस्या जयति शशिनं पङ्कजं नेत्रयुग्मं
कान्तिस्तप्तं कनकमनले मौक्तिकं दन्तपङ्क्तिः ।
कण्ठः शङ्खं हसति कलिकां नासिका चम्पकस्य
द्राक्षां वाणी भ्रमरमलको दन्तवासः प्रवालम् ॥ ४० ॥

**अन्वयः**—यस्याः वक्त्रं शशिनं जयति, नेत्रयुग्मं पङ्कजं जयति, कान्तिः अनले तप्तं सुवर्णं जयति, दन्तपङ्क्तिः मौक्तिकं जयति । कण्ठः शङ्खं हसति, नासिका चम्पकस्य कलिकां हसति, वाणी द्राक्षां हसति, अलकः भ्रमरं हसति, दन्तवासः प्रवालं हसति ।

**व्याख्या**—वक्त्रमिति । यस्याः मम पत्न्याः, वक्त्रं मुखम्, शशिनं चन्द्रं जयति पराभवति । एवं सर्वत्र योजनीयम् । नेत्रयुग्मं नयनयुगलं, पङ्कजं कमलं, कान्तिः शरीरस्य द्युतिः, 'शोभा कान्तिर्द्युतिश्छविः' इत्यमरः । अनले अग्नौ, तप्तं कनकं सुवर्णं, 'वह्नौ तप्तं सुवर्णं कान्तिविशेषं पुष्णाती'ति प्रसिद्धम् । दन्तपङ्क्तिः मौक्तिकं मुक्ताफलं जयति । कण्ठः गलः, शङ्खं हसति । नासिका चम्पकस्य सुवर्णचम्पकस्य कलिकां कोरकं, वाणी वाक्, द्राक्षां द्राक्षाफलम्, अलकः केशपाशः, जातौ एकवचनम् । भ्रमरं भृङ्गं, दन्तवासः ओष्ठः, प्रवालं विद्रुमं पल्लवं वा हसति तिरस्करोति । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । प्रतीपोपमालङ्कारः ।

**हिन्दी**—जिसका मुख चन्द्रमा की सुन्दरता को, दोनों नेत्र नीलकमल को, शरीर की शोभा अग्नि में तपे हुए सोने को और दन्तपंक्ति मोतियों की सुन्दरता को जीत लेती है । जिसका कण्ठ शंख को, नासिका चम्पक की कलिका को, जिसकी सुरीली वाणी द्राक्षाफल की मधुरता को, केशपाश भ्रमरों को तथा होंठ मूँगे ( या पल्लव ) को हँसते रहते हैं ।

*English trans* : Her face excells the moon. Her eyes surpass the lotus. The lustre of her body subjugates gold heaetd in the fire and her teeth are more beautiful than pearls. Her throat laughs at the conchshell. Her nose ridicules the Champak-bud. Her voice is sweeter than the grapes. Her hair mock at the bees and her lips scoff at the coral.

सा वैदग्धी वचनरचने नैपुणं तच्च काव्ये
तद् वैदुष्यं वचसि विरलं संस्कृते प्राकृते च ।
सङ्गीते सा श्रुतिमधुरता तच्च वीणापटुत्वं
सम्प्राप्ता या भुवि तनुमती भाति विद्या कला वा ॥ ४१ ॥

**अन्वयः**—तस्याः वचनरचने सा वैदग्धी, काव्ये च तत् नैपुण्यं, संस्कृते प्राकृते च वचसि तद् वैदुष्यं, सङ्गीते सा श्रुतिमधुरता, तत् च वीणापटुत्वं या भुवि सम्प्राप्ता तनुमती विद्या कला वा भाति ।

**व्याख्या**—सेति । तस्याः मम पत्न्याः, वचनरचने वाग्विन्यासे, सा अनिर्वचनीया वैदग्धी संस्कारशालिता, काव्ये च काव्यप्रणयने च तत् अनिर्वचनीयं नैपुण्यं प्रावीण्यं, संस्कृते गीर्वाणभाषायां, प्राकृते देशभाषायां महाराष्ट्र्यादिषु, तत् अनिर्वचनीयं वैदुष्यं पाण्डित्यं, सङ्गीते गानप्रसङ्गे, सा श्रुतिमधुरता कण्ठमाधुर्येण परश्रोत्रसुखदायित्वं, तच्च वीणायां वीणावादने, पटुत्वं निपुणत्वं, या मम पत्नी, भुवि भूलोके, सम्प्राप्ता अवतीर्णा, तनुमती शरीरिणी, विद्या साहित्यादिविद्या, कला सङ्गीतादिकला वा, भाति शोभते ।

**हिन्दी**—मेरी पत्नी आपस के बोलचाल में अत्यन्त चतुर, काव्यरचना में निपुण, संस्कृत तथा देशज भाषाओं में पण्डित है । उसका गायन बहुत ही श्रवण-मधुर है तथा वह वीणावादन में भी प्रवीण है । अधिक क्या कहा जाय, वह शरीर धारण की हुयी साहित्यविद्या अथवा संगीतादिकला की भाँति शोभित होती है ।

*English trans* : She possesses great efficiency in speech and skill in composing poems. She has a proficiency in Sanskrit and Prakrit which is very rare. She has a sweet voice for music and skill in playing lute. It seems that knowledge and art personified have come to the earth in her form.

भुञ्जाना या विरसकबलान् भोजयित्वा समस्तान्
श्वश्रूं वृद्धां श्वशुरमनिशं साधु शुश्रूषमाणा ।
दूरस्थास्मद्‌विरहपिशुनामेकवेणीं दधाना
ग्रीष्मक्षीणा सरिदिव भजेन्नाऽधुना पूर्वशोभाम् ।। ४२ ।।

**अन्वयः**—समस्तान् भोजयित्वा विरसकबलान् भुञ्जाना, वृद्धां श्वश्रूं श्वशुरम् अनिशं साधु शुश्रूषमाणा, दूरस्थास्मद्‌विरहपिशुनाम् एकवेणीं दधाना या ग्रीष्मक्षीणा सरित् इव अधुना पूर्वशोभां न भजेत् ।

**व्याख्या**—भुञ्जानेति । इदानीं विरहजन्यं विपर्ययं दर्शयति । समस्तान् गृहस्थितान् सकलान् जनान्, भोजयित्वा भोजनं कारयित्वा, विरसान् रसहीनान्, कवलान् अन्नस्य ग्रासान्, भुञ्जाना सेवमाना, वृद्धां श्वश्रूं मज्जननीं, श्वशुरं मम जनकं च, अनिशं नित्यं, साधु सम्यक्, शुश्रूषमाणा परिचरन्ती, दूरस्थानाम् अस्माकम् 'अस्मदो द्वयोश्च' इति बहुवचनम् । विरहस्य वियोगस्य, पिशुनां सूचिकाम्, 'पिशुनौ खलसूचकौ' इत्यमरः । एका चासौ वेणी च ताम्, 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति समासः । दधाना धारयन्ती, या मम पत्नी, ग्रीष्मेण निदाघेन, क्षीणा कृशा, सरिदिव नदीव, अधुना इदानीं, विरहावस्थायाम्, पूर्वां शोभां सुषमां, न भजेत् न वहेत् ।

**हिन्दी**—परिवार के सब लोगों को भोजन कराकर वह कुछ नीरस अन्न के ग्रासों को खाती हुई, वह अपने वृद्ध सास-ससुर की भक्ति से सदैव भली-भाँति सेवा करती हुई दूर देश में स्थित मेरे विरह को सूचित करने वाली एक वेणी ( चोटी ) को धारण करने वाली मेरी पत्नी ग्रीष्म ऋतु में सूखी हुई नदी के समान कृशकाय हो गयी होगी, अतएव उसकी वह सुन्दरता अब तुम्हें नहीं दिखलायी देगी ।

*English trans :* Now she must be taking a few testless mouthfuls of food after feeding all the persons in the house and looking after her aged mother-in-law and father-in-law carefully. She must be having a single braid of hair as a mark of separation from me who is away. So now she may not possess her former beauty like a river emaciated in the summer.

दृष्टेर्यायात् तव विषयतां वल्लभा सा मदीया
चान्द्री लेखा प्रतिपदि यथा दावतप्ता लता वा ।
ध्यानासक्ता विजितकमले चक्षुषी मीलयित्वा
दूरस्थं मां हृदयमुकुरे बिम्बितं भावयन्ती ॥ ४३ ॥

**अन्वयः**—सा मदीया वल्लभा प्रतिपदि यथा चान्द्रीलेखा, यथा वा दावतप्ता लता, विजितकमले चक्षुषी मीलयित्वा दूरस्थं हृदयमुकुरे बिम्बितं मां भावयन्ती ध्यानाऽऽसक्ता तव दृष्टेः विषयतां यायात् ।

**व्याख्या**—दृष्टेरिति । सा मदीया मम, वल्लभा पत्नी, प्रतिपदि प्रतिपत्तिथिगता चान्द्री चन्द्रस्य लेखा यथा कलेव, वा अथवा, दावेन वनवह्निना, तप्ता पीडिता, लतेव वल्लिरिव, 'वने च वनवह्नौ च दवो दाव इहेष्यते' इति शब्दार्णवः । विजितं तिरस्कृतं कमलं याभ्यां ते, चक्षुषी नयने, मीलयित्वा सङ्कोचयित्वा, दूरस्थं दूरदेशे वर्तमानं, हृदयं मुकुरः दर्पण इव तत्र, 'दर्पणे मुकुरादर्शौ' इत्यमरः । बिम्बितं प्रतिफलितम्, मां भावयन्ती चिन्तयन्ती, ध्यानाऽऽसक्ता ध्यानपरायणा, तव दृष्टेः विषयतां गोचरतां, यायात् प्राप्नुयात् ।

**हिन्दी**—वह मेरी प्रियपत्नी प्रतिपदा की चन्द्रलेखा के सदृश अथवा दावाग्नि से झुलसी हुई लता जैसी लगती होगी । कमल को तुच्छ सिद्ध करने वाली अपनी दोनों आँखों को बन्द करके अपने हृदयरूपी शीशे में मेरा प्रतिबिम्ब देखती हुई ध्यानमग्न तुम्हारी दृष्टि के सामने आयेगी ।

*English trans* **:** You will observe my beloved wife like the digit of the moon visible on the first day of the bright lunar fortnight or like a creeper afflicted by the forest-conflagration. You shall find her absorbed in meditation with closed eyes contemplating on me who is away but reflected in the mirror of her mind.

तूष्णीं तिष्ठ क्षणमवसरं पालयन् युक्तरूपं
तन्व्यास्तस्यास्तव समुचितो नैव भङ्गः समाधेः ।
प्रातःकालाद् दिवसमखिलं व्यापृतायाः स्वकार्ये
ध्यानादन्यत्किमपि सुखदं नास्ति लब्धक्षणायाः ।। ४४ ।।

**अन्वयः**—युक्तरूपम् अवसरं पालयन् क्षणं तूष्णीं तिष्ठ । तस्याः तन्व्याः समाधेः भङ्गः तव नैव समुचितः । प्रातःकालात् अखिलं दिवसं स्वकार्ये व्यापृतायाः लब्धक्षणायाः तस्याः ध्यानात् अन्यत् किमपि सुखदं नास्ति ।

**व्याख्या**—तूष्णीमिति । युक्तरूपं समञ्जसं, 'युक्तरूपं समञ्जसम्' इत्यमरः । अवसरं समयम्, पालयन् प्रतीक्षमाणः, क्षणं कञ्चित्कालं, तूष्णीं मौनमास्थाय, 'मौने तु तूष्णीं तूष्णीकाम्' इत्यमरः । तिष्ठ । तस्याः तन्व्याः कृशाङ्ग्याः, समाधेः ध्यानावस्थायाः, भङ्गः विघ्नः, तव नैव समुचितः योग्यः, प्रातःकालात्, अखिलं सर्वं, दिवसं दिनं, स्वकार्ये गृहिण्याः कार्ये, व्यापृतायाः प्रसक्तायाः, लब्धः क्षणः निर्व्यापारस्थितिः, यया तस्याः, 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः । लब्धावकाशाया इत्यर्थः, तस्याः मम पत्न्याः, ध्यानात् मम चिन्तनात्, अन्यत् किमपि सुखदं सुखप्रदं नास्ति, मद्विरहे केवलं मच्चिन्तनं तस्याः विनोदहेतुः ।

**हिन्दी**—उचित अवसर की प्रतीक्षा करते हुए तुम कुछ समय तक चुप-चाप खड़े रहना । उसकी समाधि को तोड़ना तुम्हारे लिए उचित नहीं होगा । प्रातःकाल से पूरे दिन भर अपने काम-काज में व्यस्त रहने के बाद समय पाने पर वह मेरा ध्यान किया करती है । इसके अतिरिक्त उसके सुख पाने का दूसरा कोई भी उपाय नहीं है ।

*English trans* : Please wait there for a moment looking for a proper opportunity to approach. Do not disturb her in her meditation. For her, who is busy in the household work all the day from day-break there is nothing more delightful than meditation when she gets leisure.

प्रत्यापन्ना नयनयुगलं किञ्चिदुन्मील्य यावत्
पश्येद् हृष्टा पुलकिततनुः स्विन्नगात्रा पुरस्तात्।
तिष्ठन्नग्रे मधुररसितैराह्वयँस्तावदेनां
वक्तुं बन्धो ! ललितवचनैः प्रस्तुतं प्रारभेथाः ॥ ४५ ॥

**अन्वयः**—हे बन्धो ! प्रत्यापन्ना हृष्टा पुलकिततनुः स्विन्नगात्रा यावत् नयनयुगलं किञ्चित् उन्मील्य पुरस्तात् पश्येत्, तावत् अग्रे तिष्ठन् मधुररसितैः एनाम् आह्वयन् ललितवचनैः प्रस्तुतं वक्तुं प्रारभेथाः।

**व्याख्या**—प्रत्यापन्नेति। हे बन्धो ! प्रत्यापन्ना ध्यानान्निवृत्ता प्रकृतिमापन्ना, हृष्टा ध्याने पतिदर्शनेन प्रमुदिता, सात्त्विकभावोद्रेकात् पुलकिता सरोमाञ्चा तनुः शरीरं यस्याः सा, स्विन्नं स्वेदयुक्तं, गात्रं वपुः यस्याः सा, यावत् नयनयुगलं नेत्रयुग्मम्, उन्मील्य उद्घाटच, पुरस्तात् पुरः, पश्येत् विलोकयेत्। तावत् अग्रे पुरः, 'पुरोधिकमुपर्यग्राणि' इत्यमरः। तिष्ठन्, मधुररसितैः मधुरगर्जितैः, 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इत्यमरः। प्रत्ययोत्पादानार्थं रसितस्य माधुर्यम् अपेक्षितम्, एनां मम पत्नीम्, आह्वयन् आकारयन्, ललितैः लालित्यपूर्णैः, वचनैः प्रस्तुतं प्रकृतं, वक्तुं भाषितुम्, प्रारभेथाः उपक्रमस्व।

**हिन्दी**—भाई ! जब वह अपने ध्यान से निवृत्त होकर ध्यान में मेरा दर्शन होने से सात्त्विकभावों के कारण रोमांचित और स्वेदबिन्दुओं से युक्त मेरी पत्नी थोड़ा-सा नेत्रों को खोलकर आगे देखेगी, तब उसके सामने जाकर मधुर गर्जन रूप शब्द से उसको सम्बोधित करके तुम मेरे द्वारा भेजे गये सन्देशों को सुनाना प्रारम्भ कर देना।

*English trans* : Oh brother, after completing her meditation, when she recovers her senses delighted having the hair on her body errect and with drops of perspiration, looks ahead in your direction slightly opening her eyes, step forward and addressing her gently with your thunders begin the subject speaking in sweet tone.

यस्मिन्नन्तःपुरपरिसरे मक्षिकाऽप्यप्रवेश्या
दृष्ट्वा तस्मिन्नविदितचरं सम्मुखं त्वां गवाक्षे।
तिष्ठेद् व्रीडाविनतवदना वक्तुकामाऽप्यवाक् सा
कान्तादन्यः खलु कुलभुवां चन्द्रतुल्यश्चतुर्थ्याः ॥ ४६ ॥

**अन्वयः**—यस्मिन् अन्तःपुरपरिसरे मक्षिकाऽपि अप्रवेश्या। तस्मिन् अविदितचरं त्वां सम्मुखं गवाक्षे दृष्ट्वा सा व्रीडाविनतवदना वक्तुकामाऽपि अवाक् तिष्ठेत्। कुलभुवां कान्ताद् अन्यः खलु चतुर्थ्याः चन्द्रतुल्यः ( भवति )।

**व्याख्या**—यस्मिन्निति। यस्मिन् अन्तःपुरस्य स्त्र्यगारस्य परिसरे पर्यन्तभुवि, 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्' इति, 'पर्यन्तभूः परिसरः' इति चाऽमरः। मक्षिकाऽपि अप्रवेश्या प्रवेष्टुम् अनर्हा, प्रपूर्वकविशधातोः 'अर्हे कृत्यतृचश्च' इति सूत्रेण अर्हार्थे ण्यत्। तस्मिन् अविदितचरम् पूर्वम् अविदितम् अज्ञातम्। 'भूतपूर्वे चरट्' इति चरट्। त्वां सम्मुखं पुरो वर्तमानं गवाक्षे वातायने, दृष्ट्वा विलोक्य, सा मम पत्नी, व्रीडया लज्जया, विनतम् अवनतं वदनं मुखं यस्याः सा, वक्तुकामा वक्तुं भाषितुं कामः अभिलाषः यस्याः सा। 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति मलोपः। 'को भवान्' कथमत्र प्राप्तः, एवमादि भाषितुकामाऽपि, अवाक् अविद्यमाना वाक् वाणी यस्याः सा, मूकीभूता इत्यर्थः। तिष्ठेत्। ननु 'सा वैदग्धी वचनरचने' इत्येवं प्रगल्भायाः तस्याः कथं लज्जयाऽधोमुखत्वं मूकत्वं च सङ्गच्छते, इत्याह—कुलभुवां कुलस्त्रीणां, कान्ताद् भर्तुः अन्यः पुमान्, खलु निश्चयेन, चतुर्थ्याः चन्द्रतुल्यः चतुर्थीचन्द्र इव द्रष्टुमयोग्यः किं पुनर्भाषितुम्।

**हिन्दी**—जिस अन्तःपुर के परिसर में मक्खी का भी प्रवेश हो पाना कठिन है, वहाँ सर्वथा अनजान तुमको अपनी खिड़की के सामने आया देखकर लज्जित हुई वह मेरी पत्नी बोलने की इच्छा होने पर भी तुमसे कुछ कह न सकेगी, क्योंकि कुलवधुओं के लिए अपने पति से अतिरिक्त पुरुष चतुर्थी के चन्द्रमा के समान देखने के योग्य भी नहीं होते हैं, वार्तालाप करना तो दूर रहा।

*English trans* : Seeing you, a complete stranger, face to face at the window in the inner apartment of the house where it is difficult, even for a fly to enter, she will be stupefied and remain speechless, though desirous to speak some thing, with her head bent down bashfully. Indeed, a person other than the husband is like the moon of the fourth day of the bright lunar fortnight for high born chaste women.

तामाश्वास्य प्रखरविरहक्लान्तगात्रां वचोभि-
र्दग्धप्रायामिव जललवैर्ज्येष्ठमासे प्रियङ्गुम् ।
सन्देशं मे कथय कुशलं व्याहरन् विस्तरेण
प्रायः सर्वो भवति मुखरः स्नेहसंसिक्तचित्तः ॥ ४७ ॥

**अन्वयः**—ज्येष्ठमासे दग्धप्रायां प्रियङ्गुं जललवैः इव प्रखरविरहक्लान्तगात्रां तां वचोभिः आश्वास्य मे कुशलं व्याहरन् सन्देशं विस्तरेण कथय। स्नेह-संसिक्तचित्तः सर्वः प्रायः मुखरः भवति।

**व्याख्या**—तामिति। ज्येष्ठमासे ग्रीष्मर्तौ, दग्धप्रायां दिवाकरकिरणैः प्रायेण दग्धां तप्ताम्, प्रियङ्गुं श्यामालतां, 'श्यामा तु महिलाह्वया। लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली' इत्यमरः। जललवैः जलकणैरिव, प्रखरविरह-क्लान्तगात्रां प्रखरेण दुःसहेन विरहेण वियोगेन क्लान्तं म्लानं गात्रं शरीरं यस्याः तां, वचोभिः सान्त्वपूर्णैः वचोविन्यासैः, आश्वास्य आश्वस्तां विधाय, मे मम, कुशलं क्षेमं, व्याहरन् निवेदयन्, मे सन्देशं वाचिकं, विस्तरेण कथय ब्रूहि। ननु 'मितं च सारं च वचो हि वाग्मिता' इत्यभियुक्तोक्तेः विस्तरो नोचितः। अत आह—स्नेहसंसिक्तचित्तः स्नेहेन प्रेम्णा, संसिक्तं पूर्णं, चित्तं मनो यस्य सः, सर्वः प्रायः बाहुल्येन, मुखरः वाचालः, भवति सम्पद्यते।

**हिन्दी**—जिस प्रकार तुम ज्येष्ठमास में ग्रीष्म के ताप से झुलसती हुई प्रियंगुलता को अपने जलबिन्दुओं से आश्वस्त करते हो, उसी प्रकार कठोर विरह से मलिन मेरी पत्नी को अपने वचनों से आश्वस्त करके मेरी कुशल सुनाकर विस्तार से मेरा सन्देश कहना, क्योंकि हृदय के स्नेहयुक्त होने पर प्रायः सभी वाचाल हो जाते हैं।

*English trans* : Console her who is tormented by the long separation from me with sweet words as you nourish a Shyama creeper almost burnt by the heat of the Jyestha month by sprinkling drops of rain then announcing my welfare tell my message in detail. Because the affectionate people become generally talkative.

मां जानीथाः सुमुखि ! सुहृदं त्वत्पतेर्वारिवाहं
दूतावासे मलयनिलये दूरतः संस्थितस्य ।
निर्घोषैर्यः पथिषु पथिकान् प्रेरयत्यार्द्रचेता
धारापातैः सुखयति चिरं ग्रीष्मतप्तां धरित्रीम् ॥ ४८ ॥

**अन्वयः**—हे सुमुखि ! दूरतः मलयनिलये दूतावासे संस्थितस्य त्वत्पतेः सुहृदं वारिवाहं मां जानीथाः । यः आर्द्रचेताः निर्घोषैः पथिकान् पथिषु प्रेरयति । धारापातैः चिरं ग्रीष्मतप्तां धरित्रीं सुखयति ।

**व्याख्या**—मामिति । हे सुमुखि ! सुवदने ! दूरतः दूरदेशे, मलयनिलये मलयविषये, अथवा मलयः निलयः आधारः यस्य तादृशे दूतावासे दूत-निवासे, संस्थितस्य निवसतः, त्वत्पतेः तव भर्तुः, 'पतिः समास एव' इति घिसंज्ञा । सुहृदं मित्रं, वारिवाहं मेघं, मां जानीथाः विद्धि । यः आर्द्रं सकरुणं चित्तं हृदयं यस्य सः, निर्घोषैः गर्जितैः, पथिकान् अध्वगान्, पथिषु मार्गेषु, गृहगमनाय प्रेरयति । यस्य निर्घोषं श्रुत्वा पथिका गृहगमनोत्सुकाः सन्तः पथि प्रवर्तन्ते इत्याशयः । यः धारापातैः आसारैः, चिरं चिरकालं, ग्रीष्मेण निदाघेन, तप्तां क्लिष्टां, धरित्रीं पृथिवीं, सुखयति आनन्दयति । चिरविरहखिन्नां त्वामपि तव पत्युः सन्देशकथनेन प्रीणयामीति भावः । अत्र समासोक्तिरलङ्कारः ।

**हिन्दी**—हे सुन्दरी ! मलय पर्वत पर स्थित दूतावास में रहने वाले तुम्हारे पति का मैं परम मित्र मेघ हूँ । अर्थात् मुझे अपने पति का मित्र समझो । जो करुणा से आर्द्र चित्तवाला अपने मधुर शब्दों से परदेशी पथिकों को घर जाने के लिए प्रेरित करता है और जो जल बरसाकर चिरकाल से गरमी से सन्तप्त ( दुःखित ) पृथिवी को सुखी बना देता है ।

*English trans* : Oh lady with a lovely face ! I am a friend of your husband who is away in the Malaya region, posted as an ambassador. I am kind-hearted and urge the travellers by my thunders to return home, I comfort the earth which is afflicted by the heat of summer by heavy showers of rain.

राजास्थाने तव पतिरसौ दूतकार्ये प्रसक्तः
साक्षात्कुर्वन् चिरमपि नवं राजनीतेर्विलासम् ।
श्रुत्वाऽऽकाशे मदनपटहं नूत्नजीमूतनादं
प्राप्तो मोहं शशिमुखि ! मया प्राहिणोद् वाचिकं ते ॥ ४९ ॥

**अन्वयः**—हे शशिमुखि ! राजास्थाने दूतकार्ये प्रसक्तः चिरमपि नवं राजनीतेः विलासं साक्षात्कुर्वन् असौ तव पतिः आकाशे मदनपटहं नूत्नजीमूतनादं श्रुत्वा मोहं प्राप्तः, मया ते वाचिकं प्राहिणोत् ।

**व्याख्या**—राजास्थाने इति । हे शशिमुखि ! चन्द्रवदने ! राजास्थाने राजसभायाम्, 'आस्थानीक्लीबमास्थानं स्त्रीनपुंसकयोः सदः' इत्यमरः । दूतकार्ये दूत्ये, प्रसक्तः तत्परः, चिरमपि चिरन्तनमपि, नवं नवीनं, राजनीतेर्विलासं स्वरूपं, साक्षात्कुर्वन् अनुभवन्, तदुक्तं भर्तृहरिणा—'सत्यानृता च परुषा प्रियवादिनी च, हिंस्रा दयालुरपि चार्ऽर्थपरा वदान्या । नित्यव्यया प्रचुरनित्यधनागमा च, वाराङ्गनेव नृपनीतिरनेकरूपा' ॥ इति । असौ तव पतिः भर्ता, आकाशे गगने, मदनपटहं मदनस्य कामस्य, पटहम् आगमनसूचकं वाद्यविशेषं, नूत्नस्य नवीनस्य जीमूतस्य मेघस्य, नादं घोषं, श्रुत्वा आकर्ण्य, मोहं प्राप्तः, मया मद्द्वारा, ते तव त्वदर्थे इत्यर्थः, वाचिकं सन्देशं, 'सन्देशवाग् वाचिकं स्यात्' इत्यमरः । 'वाचो व्याहृतार्थायाम्' इति वाक्शब्दात् ठक्प्रत्ययः । प्राहिणोत् प्रैषयत् । अहं तस्य सन्देशहर इत्यर्थः ।

**हिन्दी**—हे सुन्दरी ! राजा की सभा में दूतकार्य में लगा हुआ, बहुत समय से राजनीति के दाँव-पेंचों को देखता हुआ यह तुम्हारा पति आकाश में कामदेव के वाद्य के समान नये मेघ के शब्द को सुनकर (तुम्हारे विरह के कारण) बेहोश हो गया था ( कुछ समय बाद होश में आकर ) उसने मेरे द्वारा तुम्हारे लिए कुछ सन्देश भेजा है ।

*English trans :* Oh lady with a beautiful face like the moon ! your husband is attached to the embassy in the court of the king of Malaya. He is observing the different modes of politics appearing new at every moment though really old. Hearing the fresh thunder of the cloud like a sound of drum of cupid he was overcome by passion and he has sent a message to you through me.

कृत्वा सह्यक्षितिधरसुतावीचिमालाविहारं
सञ्चच्छन्तो मलयकटके वाटिकां चन्दनानाम् ।
वाता एते सुदति ! दधतः सौरभं केतकानां
प्रत्यङ्गं मे प्रलयदहनज्वालकल्पा लगन्ति ।। ५० ।।

इदानीं मेघः सन्देशं कथयति—

**अन्वयः**—सह्यक्षितिधरसुतावीचिमालाविहारं कृत्वा मलयकटके चन्दनानां वाटिकां सञ्चच्छन्तः, केतकानां सौरभं दधतः एते वाता मे प्रत्यङ्गं प्रलयदहन-ज्वालकल्पाः लगन्ति ।

**व्याख्या**—कृत्वेति । सह्यक्षितिधरसुतावीचिमालाविहारं सह्यः क्षितिधरः पर्वतः तस्य सुता कावेरी तस्याः वीचिमालासु तरङ्गपरम्परासु विहारं क्रीडां कृत्वा, मलयस्य मलयाचलस्य, कटके नितम्बे, 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । चन्दनानां चन्दनवृक्षाणां, वाटिकाम् उपवनं, सञ्चच्छन्तः संस्पृशन्तः । सकर्मकत्वेन 'समो गम्यृच्छिभ्याम्' इति नाऽत्मनेपदम् । तत्र 'अकर्मकात्' इत्यस्यानुवृत्तेः । केतकानां सौरभं परिमलं, दधतः धारयन्तः, एते वाताः वायवः, मे मम, प्रत्यङ्गम् अङ्गे अङ्गे इति प्रत्यङ्गम् । वीप्सायामव्ययीभावः । प्रलयदहनः प्रलयाग्निः तस्य ज्वालाः शिखाः तत्तुल्याः । लगन्ति स्पृशन्ति, 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखास्त्रियाम्' इत्यमरः ।

**हिन्दी**—अब मेघ सन्देश सुनाना प्रारम्भ करता है—हे सुन्दरी ! ( तुम्हारे विरह के कारण ) सह्यपर्वत की पुत्री कावेरी की तरंगों में विहार करके, चन्दन वनों में भ्रमण करके तथा केतकी पुष्पों के परागों को धारण करके बहने वाली भी ये हवाएँ मेरे अंग-अंग में प्रलयाग्नि की लपटों के समान लगा करती हैं अर्थात् मुझे सुखी नहीं कर पा रही है ।

*English trans* : ( Now the cloud relates the message ). Oh lady with beautiful teeth ! These south-winds have played on the rows of the waves of the river Kaveri. They have traversed the forest of sandal-trees on the Malaya mountain. They are carrying with them the perfume of the Ketak-flowers. They are torturing every limb of my body like the flames of the fire at the dissolution of the world.

लग्ना पुष्प्यत्कुटजतरुषु श्रेणिरिन्दिन्दिराणां
जाता गुञ्जारवमुखरिता कार्मुकज्या स्मरस्य ।
पुष्पैः प्रौढैः शबलशिखराः सान्द्रधाराकदम्बाः
सन्तन्वन्तः परिमलभरं चित्तमुत्कण्ठयन्ति ॥ ५१ ॥

**अन्वयः**—पुष्प्यत्कुटजतरुषु लग्ना गुञ्जारवमुखरिता इन्दिन्दिराणां श्रेणिः स्मरस्य कार्मुकज्या जाता । प्रौढैः पुष्पैः शबलशिखराः परिमलभरं सन्तन्वन्तः सान्द्रधाराकदम्बाः चित्तम् उत्कण्ठयन्ति ।

**व्याख्या**—लग्नेति । पुष्प्यत्सु पुष्पयुक्तेषु, कुटजतरुषु गिरिमल्लिकासु, 'अथ कुटजः शक्रो वत्सको गिरिमल्लिका' इत्यमरः । लग्ना प्रसक्ता, गुञ्जारवेण मुखरिता वाचाला, इन्दिन्दिराणां भ्रमराणां, श्रेणिः पङ्क्तिः, 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः' इत्यमरः । 'भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुद्रो मधुकेशटः' इति शब्दार्णवः । स्मरस्य कामस्य, कार्मुकस्य धनुषः, ज्या मौर्वी, जाता सम्पन्ना । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । प्रौढैः स्थूलैः पुष्पैः कुसुमैः । शबलं चित्रवर्णं शिखरम् अग्रं येषां ते, 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । 'शिरोऽग्रं शिखरं वा ना' इति चाऽमरः । परिमलस्य सुगन्धस्य भरं प्रकर्षं, सन्तन्वन्तः विस्तारयन्तः सान्द्राः निबिडाः, धाराकदम्बाः नीपवृक्षाः, चित्तं मानसम्, उत्कण्ठयन्ति उत्सुकं कुर्वन्ति । कदम्बाः द्विविधाः—धाराकदम्बाः धूलिकदम्बाश्च । तत्र धाराकदम्बा वर्षाकाले धूलिकदम्बाश्च वसन्ते पुष्प्यन्ति ।

**हिन्दी**—हे सुन्दरी ! खिले हुए कुटज वृक्षों पर मँडराती तथा गुनगुनाती हुई भौंरों की पंक्ति कामदेव के धनुष की डोरी जैसी लग रही है और बड़े-बड़े फूलों से चितकबरे शिखरों वाले नीप के वृक्ष हमारे चित्त को उत्कंठित कर रहे हैं ।

*English trans* : The row of the bees noisy with buzzing clinging to the blooming Kutaj-trees has become a string of the cupid's bow. The Dharakadambas whose tops are variegated with full-grown flowers are spreading their perfume in all directions and causing a longing for a beloved person.

चन्द्रे किञ्चिद् वदनसुषमां बन्धुजीवेऽधराभां
नेत्रच्छायां कुवलयवने पल्लवे पाणिसाम्यम् ।
मुक्ताहारे दशनशुचितां काञ्चने कान्तिलेशं
पश्यन् यत्नात्तव विरहजां वेदनां सङ्क्षिणोमि ॥ ५२ ॥

**अन्वयः**—चन्द्रे तव किञ्चित् वदनसुषमां पश्यन्, बन्धुजीवे तव किञ्चित् अधराभां पश्यन्, कुवलयवने तव किञ्चित् नेत्रच्छायां पश्यन्, पल्लवे तव किञ्चित् पाणिसाम्यं पश्यन्, मुक्ताहारे तव किञ्चित् दशनशुचितां पश्यन्, काञ्चने तव कान्तिलेशं पश्यन् यत्नात् तव विरहजां वेदनां सङ्क्षिणोमि ।

**व्याख्या**—चन्द्र इति । चन्द्रे तव किञ्चित् अल्पीयसीमेव न तु साकल्येन वदनस्य मुखस्य सुषमां परमां शोभां, 'सुषमा परमा शोभा' इत्यमरः । पश्यन् विलोकयन्, बन्धुजीवे बन्धूकपुष्पे, 'बन्धूको बन्धुजीवकः' इत्यमरः । अधरस्य ओष्ठस्य आभां शोभां, किञ्चित् अल्पीयसीमेव न तु पूर्णाम्, एवं सर्वत्र योजनीयम् । कुवलयानाम् उत्पलानां वने, 'स्यादुत्पलं कुवलयम्' इत्यमरः । तव नेत्रयोः छायां कान्ति, 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । पल्लवे किसलये, पाणिसाम्यं हस्तसादृश्यम्, मुक्तानां मुक्ताफलानां हारे मालायां, दशनानां दन्तानां शुचितां शुभ्रतां, 'रदना दशना दन्ताः' इति 'शुभ्रशुक्लशुचिश्वेतविशदश्येतपाण्डराः' इति चाऽमरः । काञ्चने सुवर्णे, तव कान्तेः शरीरप्रभायाः, लेशं लवं, 'लवलेशकणाणवः' इत्यमरः । पश्यन्, यत्नात् प्रयत्नादेव तव विरहजां वियोगजन्यां वेदनां पीडां सङ्क्षिणोमि अपनयामि ।

**हिन्दी**—हे सुन्दरी ! चन्द्रमा में कुछ तुम्हारे मुखकमल की शोभा को देखते हुए, बन्धूक पुष्प में कुछ तुम्हारे अधर पल्लव की शोभा को देखते हुए, कुवलय वन में कुछ तुम्हारे नेत्रों की छाया को देखते हुए, नवीन किसलय में तुम्हारे पाणितल की समानता को देखते हुए, मोतियों के हार में कुछ तुम्हारे दाँतों की उज्ज्वलता को देखते हुए और सुवर्ण में कुछ तुम्हारी कान्ति को देखते हुए तुम्हारे कारण उत्पन्न अपनी विरहवेदना को यत्नपूर्वक किसी प्रकार भुलाया करता हूँ ।

*English trans* : I try to lessen my pain caused by your separation endeavouring to find some beauty of your face in the moon, a little resemblance of your lips in the Bandhujiva flower, a shade of your eyes in the cluster of blue water lilies, likeness of your hands in the new shoots, the brightness of your teeth in the neckless of pearls and a bit of your luster in gold.

पश्यामि त्वां प्रियसखि ! मनश्चक्षुषा सम्मुखीनां
पूजामग्नां धवलवसनां बद्धवेणीं प्रभाते ।
प्राप्ते मध्यं त्वहनि पितरौ भोजयन्तीं मदीयौ
शेषार्धे मां निभृतनयनां चिन्तयन्तीं हृदिस्थम् ।। ५३ ।।

**अन्वयः**—हे प्रियसखि ! मनश्चक्षुषा त्वां प्रभाते धवलवसनां बद्धवेणीं पूजामग्नां, अहनि मध्यं प्राप्ते तु मदीयौ पितरौ भोजयन्तीं, शेषार्धे निभृतनयनां हृदिस्थं मां चिन्तयन्तीं सम्मुखीनां पश्यामि ।

**व्याख्या**—पश्यामीति । हे प्रियसखि ! मनोमयेन चक्षुषा त्वां सम्मुखीनां सम्मुखं स्थितां, 'यथामुखसम्मुखस्य दर्शनः खः' इति खप्रत्ययः । पश्यामि अवलोकयामि । कथम्भूताम्—प्रभाते प्रातःकाले, धवलं शुभ्रं वसनं वस्त्रं यस्यास्ताम्, बद्धा वेणी यया ताम्, पूजायां मग्नां तत्पराम्, अहनि दिने, मध्यं प्राप्ते मध्याह्ने इत्यर्थः । मदीयौ मम, पितरौ मातापितरौ, 'पिता मात्रा' इत्येकशेषः । भोजयन्तीं स्वहस्तेन परिवेष्य व्यजनचालनपूर्वकं भोजनं कारयन्तीं, शेषार्धे दिनस्य अपरार्धे, निभृते निश्चले नयने यस्यास्तां हृदिस्थं हृदयस्थं, 'सुपिस्थः' इति कप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' 'हृद्द्युभ्यां च' इति सप्तम्या अलुक् । हृदयस्थिते द्वादशदले कमले परिस्फुरन्तम् । पतिव्रतायाः तस्याः समाधिः सुलभः । मां स्वपतिं, चिन्तयन्तीं ध्यायन्तीम् ।

**हिन्दी**—हे प्रिय सखी ! मैं यहाँ रहते हुए भी तुमको अपनी अन्तर्दृष्टि से सामने उपस्थित हुई इन-इन रूपों में देख रहा हूँ । प्रातःकाल सफेद साड़ी को धारण की हुई, चोटी की हुई, पूजा में मन लगायी हुई, दोपहर के समय मेरे माता-पिता को भोजन कराती हुई, दोपहर के बाद घर के काम-काज से फुर्सत मिलने पर आँखें बन्द करके मेरा ध्यान करती हुई ( तुम्हें प्रतिदिन देखा करता हूँ ) ।

*English trans* : Oh my dear friend ! I see you infront of me by my mind's view. In the morning wearing a white garment, having a single braid of hair and absorbed in worship. Feeding my parents at mid-day and in the other half portion of the day with closed eyes bringing me before the mind.

रात्रौ बाष्पस्थगितनयनां भूमिपृष्ठे शयानां
प्रत्यूषस्थामिव कुमुदिनीं पद्मिनीं वा निशायाम् ।
दुःखक्लान्तामपि कुलवधूधोरणीमाचरन्ती-
मग्रे शृङ्गग्रहणविधिना कीर्तनीयां सतीनाम् ।। ५४ ।।

**अन्वयः**—रात्रौ बाष्पस्थगितनयनां भूमिपृष्ठे शयानां, प्रत्यूषस्थां कुमुदिनीम् इव वा निशायां पद्मिनीम् इव ( स्थितां ) दुःखक्लान्ताम् अपि कुलवधू-धोरणीम् आचरन्तीं शृङ्गग्रहणविधिना सतीनाम् अग्रे कीर्तनीयाम् ।

**व्याख्या**—रात्राविति । पुनः कथम्भूतां पश्यामि, बाष्पैः अश्रुभिः स्थगिते आच्छादिते नयने यस्यास्ताम्, भूमिपृष्ठे आस्तरणरहिते भूपृष्ठे शयानां वर्तमानाम्, प्रत्यूषस्थां प्रभातकालिकीं कुमुदिनीं कैरविणीमिव, चन्द्रविरहेण म्लानां, वा अथवा, निशायां रात्रौ, सूर्यविरहेण म्लानां पद्मिनीमिव कमलिनीमिव दृश्यमानां, दुःखेन पतिविरहजन्येन क्लान्तां पीडितामपि, कुलवधूनां कुलस्त्रीणां धोरणीं परम्परां धर्ममित्यर्थः । आचरन्तीं पालयन्तीम्, शृङ्गग्रहणविधिना शृङ्गग्राहिकान्यायेन 'यथा गोमण्डलस्थां गां शृङ्गं गृहीत्वा विशेषतो दर्शयति तथा विशेषतो दर्शनीयामित्यर्थः । सतीनां पतिव्रतानां, 'सती साध्वी पतिव्रता' इत्यमरः । अग्रे धुरि, कीर्तनीयां गणनीयाम् ।

**हिन्दी**—और किस रूप में मैं तुम्हें देख रहा हूँ—हे सुन्दरी ! रात में आँसुओं से भरी हुई आँखों से युक्त होकर बिस्तर रहित भूमि पर लेटी हुई, प्रातःकाल के पहले जो स्थिति चन्द्रमा के विरह में कुमुदिनी की होती है, अर्थात् मलिन मुखवाली, अथवा रात में सूर्य के विरह से कमलिनी के सदृश दिखलायी देने वाली, पतिविरहजनित दुःख से दुःखित, कुलवधुओं की परम्परा का निर्वाह करती हुई, श्रृंगग्रहणविधि ( नमूने के रूप ) से सतीस्त्रियों के आगे गिने जाने योग्य ।

*English trans* : Lying on the bare floor at night with your eyes full of tears, resembling the weathered white lily-plant at day-break orthe lotus-plant at night. Following the path of high born ladies though afflicted by excessive grief and fit to be particular!y mentioned as the foremost among the chaste women.

आसीत्सुभ्रूः परिणयविधिस्त्वावयोर्बाल्य एव
त्वां निर्गच्छद्दशनमुकुलां मन्दहासां स्मरामि ।
मातापित्रोर्मधुरवचनैर्मानसं मे हरन्तीं
क्रीडाकाले कृतककलहं कुर्वतीं यन्मयाऽपि ॥ ५५ ॥

**अन्वयः**—हे सुभ्रूः ! आवयोः परिणयविधिः तु बाल्ये एव आसीत् । यत् निर्गच्छद्दशनमुकुलां मन्दहासां मधुरवचनैः मे मातापित्रोः मानसं हरन्तीं, क्रीडा-काले मयाऽपि कृतककलहं कुर्वतीं त्वां स्मरामि ।

**व्याख्या**—आसीदिति । हे सुभ्रूः ! शोभने भ्रुवौ यस्याः तत्सम्बुद्धिः । 'नेयङुवङ्स्थानावस्त्री' इति' नदीसंज्ञानिषेधात् 'अम्बार्थनद्योर्ह्रस्वः', इति ह्रस्वो न । आवयोः तव मम च, परिणयविधिः विवाहसंस्कारः 'विवाहोपयमौ समौ' । 'तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इत्यमरः । बाल्ये शैशव एव, आसीत् अभवत् । 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः । यत् यस्मात् कारणात्, निर्गच्छन्ति दशनमुकुलानि दन्तकुड्मलानि यस्यास्ताम्, मन्दः हासः हास्यं यस्यास्ताम्, मधुरवचनैः प्रियालापैः बाल्योचितैः, मे मम, मातापित्रोः मातुः पितुश्च, 'आनङ् ऋतो द्वन्द्वे' इति पूर्वपदस्यानङ् । मानसं चित्तं, हरन्तीं मोहयन्तीं, क्रीडाकाले केलिसमये, मयाऽपि कृतककलहं मिथ्याकलहं, कुर्वतीं कुर्वाणां त्वां स्मरामि ।

**हिन्दी**—हे सुन्दर भौंहों वाली ! हम लोगों का विवाह तो बचपन में ही हो गया था, क्योंकि तुम्हारी दन्तपंक्ति अभी निकल ही रही थी, मन्दहासयुक्त अपने मधुर वचनों से तुम मेरे माता-पिता के मन को हरण करती हुई, प्रणय-क्रीड़ा के समय मेरे साथ भी प्रणय-कलह करती थी । इन घटनाओं का मैं आज भी स्मरण किया करता हूँ ।

*English trans* : Oh lady with beautiful eyebrows ! we were married in our childhood. I remember you with a gentle smile showing your small bud-like teeth, attracting my parents with your sweet words and making a false quarrel with me while playing.

कच्चिद् बाले स्मरसि कुतुकान्निष्पदक्षेपशब्दं
पश्चादेत्य त्वरितमकरोर्यन्मदक्ष्णोः पिधानम् ।
पृष्टः काऽहं कथय तदिति प्रत्यवोचं त्वयाऽहं
चौरी काचिद् भवसि हृदयं पश्यतो मे हरन्ती ।। ५६ ।।

**अन्वयः**—हे बाले ! कच्चित् स्मरसि यत् कुतुकात् निष्पदक्षेपशब्दं पश्चात् एत्य त्वरितं मदक्ष्णोः पिधानम् अकरोः । 'काऽहं तत्कथय' इति त्वया पृष्टः अहं 'पश्यतो मे हृदयं हरन्ती काचित् चौरी भवसि' इत्यवोचम् ।

**व्याख्या**—कच्चिदिति । हे बाले ! कच्चित् स्मरसि, 'कच्चित् कामप्रवेदने' इत्यमरः । यत् कुतुकात् कौतुकात्, 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' इत्यमरः । पदयोः क्षेपः पदक्षेपः तस्य शब्दः पदक्षेपशब्दः, निर्गतः पदक्षेपशब्दः यस्मिन् कर्मणि यथा स्यात्तथा निष्पदक्षेपशब्दम्, पश्चात् पार्श्वभागात्, एत्य आगत्य, त्वरितं शीघ्रम्, मदक्ष्णोः मम नयनयोः, पिधानम् आच्छादनम्, 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अकरोः अकार्षीः । 'न यदि' इति निषेधात् 'अभिज्ञावचने लृट्' इति लृट् न । 'काऽहं तत्कथय' वद इति त्वया पृष्टः अनुयुक्तः, 'प्रश्नोऽनुयोगः पृच्छा' इत्यमरः । अहं पश्यतः 'षष्ठी चाऽनादरे' इति षष्ठी । मे मम, हृदयं हरन्ती त्वं काचित् चौरी भवसि, इति प्रत्यवोचम्, प्रत्युत्तरं दत्तवान् ।

**हिन्दी**—हे बाली उमर वाली ! तुम्हें कुछ याद है ? एक बार तुमने कुतूहलवश धीरे से पीछे से आकर अचानक मेरी आँखें ढँक दी थीं और 'मैं कौन हूँ बतलाओ' कहा था । तुम्हारे ऐसा पूछने पर मैंने तुम्हें ऐसा उत्तर दिया था—'मेरे देखते हुए मेरे हृदय को चुराने वाली कोई चोरनी होगी' ।

*English trans* : Oh young lady ! Do you remember that once you closed my eyes with ardour, coming quickly from behind without making any sound of your footsteps. When you asked me "Tell me, who am I ? I replied" you are a thief who have stolen my heart in the very sight of me.

स्नेहाद्वैतादशिथिलपरिष्वङ्गसंसक्तदोष्णोः
पर्यङ्काङ्के निशि शयितयोः सम्मिलद्गण्डमूलम् ।
निद्रावेशस्खलितवचनप्रक्रमादाप्रभातं
याता रात्रिः स्मरसि बहुशो जल्पतोरावयोर्यत् ॥ ५७ ॥

**अन्वयः**—स्मरसि यत् निशि पर्यङ्काङ्के स्नेहाद्वैतात् अशिथिलपरिष्वङ्ग-संसक्तदोष्णोः सम्मिलद्गण्डमूलं शयितयोः आवयोः रात्रिः बहुशः आप्रभातं निद्रावेशस्खलितवचनप्रक्रमात् जल्पतोः याता ।

**व्याख्या**—स्नेहाद्वैतादिति । स्मरसि यत् निशि रात्रौ, पर्यङ्कस्य मञ्चस्य अङ्के उत्सङ्गे, स्नेहेन प्रेम्णा, सम्पादितं यदद्वैतम् ऐक्यं, तस्मात् अशिथिलः दृढः, यः परिष्वङ्गः परिरम्भः, 'परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्' इत्यमरः । तस्मिन् संसक्तौ परस्परासक्तौ दोषौ बाहू ययोः तयोः, 'पद्न्निति' दोषन्नादेशः । सम्मिलती गण्डमूले यस्मिन् कर्मणि यथा स्यात्तथा, शयितयोः स्वपतोः, आवयोः तव मम च, रात्रिः निशा, बहुशः बहुधा, आप्रभातं प्रभातकालं यावत्, निद्राया आवेशः अभिक्रमः, तेन स्खलन् असम्बद्धः यः वचनप्रक्रमः वाग्विन्यासः, तस्मात् जल्पतोः परस्परं सँलपतोः, याता अयासीत् ।

**हिन्दी**—पुनः याद दिलाता हुआ कह रहा है—हे सुन्दरी ! तुम्हें याद है ? रात में पलंग पर प्रेम के कारण जो हम दोनों में अद्वैतता ( एकता ) आ जाती थी, दोनों ओर से दृढ़ आलिंगन के कारण एक-दूसरे से सटी हुई बाँहें, एक-दूसरे की गाल से गाल सटाकर सोये हुए हमारे अनेक बार प्रातः-काल तक नींद के वेग से शब्द लड़खड़ाते रहते थे, हमारी सारी रात बातें करते ही बीत जाती थी ।

*English trans* : Do you remember that we frequently passed our nights till dawn talking with each-other incoherently under the influence of sleep lying on a magnificent bed with our cheeks closely touching and arms inter-locked in a close embrace.

कुञ्जे कुन्दप्रसवसुभगे मण्डपे मल्लिकायाः
सान्द्रच्छाये क्वचिदुपवने वारियन्त्रान्तिके वा ।
गर्भागारे निबिडकदलीनिर्मिते वा विहारा-
न्निश्चिन्तं नः क्षण इव तदा वासरास्ते प्रयाताः ॥ ५८ ॥

**अन्वयः**—कुन्दप्रसवसुभगे क्वचित् कुञ्जे, मल्लिकायाः क्वचित् मण्डपे, सान्द्रच्छाये क्वचित् उपवने, वा क्वचित् वारियन्त्रान्तिके, निविडकदली-निर्मिते क्वचित् गर्भागारे वा विहारात् नः ते दिवसाः निश्चिन्तं क्षणः इव प्रयाताः ।

**व्याख्या**—कुञ्ज इति । कुन्दानां कुन्दलतानां प्रसवैः कुसुमैः सुभगे रमणीये, 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । क्वचित् कुत्रचित्, कुञ्जे निकुञ्जे, 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । मल्लिकायाः लताविशेषस्य, मण्डपे जनाश्रये, 'श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका' इति । 'मण्डपोऽस्त्री जनाश्रयः' इति चामरः । सान्द्रा घना छाया यस्य तादृशे, क्वचित् उपवने उद्याने, क्वचित् वारियन्त्रस्य धारायन्त्रस्य अन्तिके समीपे वा, निबिडाः सान्द्राः कदलयः रम्भाः ताभिः निर्मिते गर्भागारे वासगृहे, 'गर्भागारं वासगृहम्' इत्यमरः । विहारात् नः अस्माकम्, 'अस्मदो द्वयोश्च' इति बहुवचनम् । ते दिवसाः निर्गता चिन्ता यस्मिन् कर्मणि यथा स्यात्तथा, चिन्तारहितमित्यर्थः, क्षण इव क्षणतुल्याः प्रयाताः गताः ।

**हिन्दी**—हे सुन्दरी ! कहीं कुन्द कुसुमों के रमणीय कुञ्ज में, कहीं मल्लिका के मंडप में, घनी छाया वाले किसी बगीचे में अथवा कहीं फुँहारे के पास या कहीं घने कदली वृक्ष-समूह से निर्मित गर्भगृह में विहार करने से हमारे वे चिन्तारहित ( सुखमय ) दिन एक क्षण के समान व्यतीत हो गये ।

*English trans* : Our those days when we were free from anxiety passed like a moment. We amused ourselves sometimes in a bower of Kunja-creepers beautiful with flowers, sometimes in an arbour of Mallika plant, sometimes some where in a garden having dense-shade, sometimes near a fountain and sometimes in a pleasure appartment formed by thick plantains.

मेघच्छन्नं गगनमभितो वीक्ष्य वेल्लद्बलाकं
श्रुत्वा धीरं विरहिहृदयत्रासदं गर्जितं च।
दूरस्थां त्वां ध्रुवमशरणां चिन्तयन् विप्रयुक्ता-
माशंसामि त्वयि जनयितुं तन्वि ! धैर्यप्रवृत्तिम् ॥ ५९ ॥

**अन्वयः**—हे तन्वि ! गगनम् अभितः मेघच्छन्नं वेल्लद्बलाकं वीक्ष्य, विरहिहृदयत्रासदं धीरं गर्जितं च श्रुत्वा दूरस्थां विप्रयुक्तां ध्रुवम् अशरणां त्वां चिन्तयन् त्वयि धैर्यप्रवृत्तिं जनयितुम् आशंसामि ।

**व्याख्या**—मेघच्छन्नमिति । हे तन्वि ! कृशाङ्गि ! गगनं नभः, अभितः परितः, मेघैः घनैः, छन्नं छादितं, वेल्लन्तः चलन्तः बलाकाः विसकण्ठिकाः यस्मिन् तत्, वीक्ष्य दृष्ट्वा, 'बलाका बिसकण्ठिका' इत्यमरः । विरहिणां विरहिजनानां हृदयस्य त्रासदं त्रासकारकं, धीरं गभीरं, गर्जितं स्तनितं, च श्रुत्वा आकर्ण्य, 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इत्यमरः । दूरस्थां दूरदेशस्थितां, विप्रयुक्तां विरहिणीं, ध्रुवं निश्चयेन, अशरणाम् अविद्यमानं शरणं रक्षिता यस्यास्तां, 'शरणं गृहरक्षित्रोः' इत्यमरः । त्वां चिन्तयन् स्मरन्, त्वयि धैर्यस्य प्रवृत्तिं प्रसक्तिं, जनयितुं सम्पादयितुम्, आशंसामि कथयामि ।

**हिन्दी**—हे कृशोदरी ! चारों ओर से आकाश को बादलों से घिरा हुआ तथा एक कतार में उड़ती हुई बक-पंक्ति को देखकर विरहियों के हृदयों को कष्ट देने वाले मेघों की धीर एवं गम्भीर गर्जना को सुनकर मुझसे बिछुड़ जाने के कारण दूर रहने वाली अतएव असहाय तुम्हारी चिन्ता करते हुए मैं तुम्हें यह सन्देश भेजकर ढाढस बँधवाना चाह रहा हूँ ।

*English trans* **:** Oh slim-lady ! The sky is covered with the clouds on all sides and the cranes are moving about. I can hear the loud thunders which frighten the separated persons. I am very much worried about you who are away and separated from me and helpless. So I wish to tell you something to create courage in you.

द्वित्रान् मासान् वरतनु ! परं दुःसहो मे वियोगः
सोढव्यस्ते तदनु भविता सङ्गमः सौख्यहेतुः ।
उद्यानश्रीर्मिलति मधुना, पूर्णिमा शीतभासा
हंसेनैवं शरदि सरसी, चक्रवाकी प्रियेण ॥ ६० ॥

**अन्वयः**—हे वरतनु ! परं दुःसहो मे वियोगः ते द्वित्रान् मासान् सोढव्यः । तदनु ते मे सौख्यहेतुः सङ्गमः भविता । उद्यानश्रीः मधुना, पूर्णिमा शीतभासा, एवं सरसी शरदि हंसेन, चक्रवाकी प्रियेण मिलति ।

**व्याख्या**—द्वित्रानिति । वरा प्रशस्ता तनूः शरीरं यस्याः तत्सम्बुद्धिः हे वरगात्रि ! 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः । परम् अत्यन्तं, दुःसहः सोढुम् अशक्यः, मे मम, वियोगः विरहः, ते तव त्वयेत्यर्थः । 'कृत्यानां कर्तरि वा' इति कर्त्तरि षष्ठी । द्वित्रान् मासान्, द्वौ वा त्रयो वा द्वित्राः 'सङ्ख्ययाऽव्यया-सन्नादूराधिकसङ्ख्याः सङ्ख्येये' इति समासः । 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इति समासान्तो डच्प्रत्ययः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । सोढव्यः सह्यः, तदनु तदुत्तरं, ते तव । मे मम च, सौख्यस्य सुखस्य हेतुः कारणं, सङ्गमः संयोगः, भविता भविष्यति । 'अनद्यतने लुट्' इति लुट् । उद्यानस्य उपवनस्य श्रीः शोभा सम्पत्तिर्वा, मधुना वसन्तेन, 'मधुर्वसन्ते चैत्रे च' इति शब्दार्णवः । पूर्णिमा पौर्णमासी, 'पौर्णमासी तु पूर्णिमा' इत्यमरः । शीतभासा चन्द्रमसा, एवं सरसी शरदि शरदृतौ हंसेन, शरदि राजहंसा मानसात् पुन-रपि स्वस्वजलाशयान् आगच्छन्तीति प्रसिद्धम् । चक्रवाकी प्रियेण चक्रवाकेण मिलति सङ्गच्छते ।

**हिन्दी**—हे सुन्दरी ! मेरे अत्यन्त दुःसह वियोग को किसी प्रकार दो-तीन महीने तक और सहन करो, उसके बाद तुम्हें और मुझे सुख देने वाला हम दोनों का पुनः मिलन उसी प्रकार होगा, जैसे उद्यान की शोभा वसन्त से, पूर्णिमा चन्द्रमा से, शरद् ऋतु में बावड़ी की शोभा हंस से और चकवी अपने प्रिय चकवा से मिलती है ।

*English trans* : Oh beautiful lady ! You shall have to endure unbearable separation from me for two or three months more. Then we shall be reunited and happy. The splendour of the garden unites with the spring, the full moon-day with the moon, the lake with the swan in autumn and the female ruddy goose with her lover.

चिन्तां सर्वां जहिहि न भव क्लेशपात्रं मदर्थे
नार्हत्यल्पैरपि नवलता सेकमद्भिः प्रतप्तैः ।
निःशेषं मे भवति कुशलं चन्द्रमौलेः प्रसादा-
च्छत्रच्छायां शिरसि वहतो जायते नोष्मबाधा ॥ ६१ ॥

**अन्वयः**—सर्वां चिन्तां जहिहि । मदर्थे क्लेशपात्रं न भव । नवलता अल्पैः अपि प्रतप्तैः अद्भिः सेकं न अर्हति । चन्द्रमौलेः प्रसादात् मे निःशेषं कुशलं भवति । छत्रच्छायां शिरसि वहतः उष्मबाधा न जायते ।

**व्याख्या**—चिन्तामिति । सर्वां सकलां, चिन्तां मानसीं व्यथां, जहिहि परित्यज । 'पुंस्याधिर्मानसी व्यथा । स्याच्चिन्ता' इत्यमरः । मदर्थे मत्कृते, क्लेशानां दुःखानां पात्रं भाजनं, न भव । नवलता नवीना वल्लिः 'वल्ली तु व्रततिर्लता' इत्यमरः । अल्पैः स्तोकैरपि, प्रतप्तैः अत्युष्णैः, अद्भिः जलैः, 'अपोभिः' इति तकारोऽन्तादेशः । सेकं सेचनं, न अर्हति न सहते । चन्द्रमौलेः शिवस्य, प्रसादात् कृपया, मे मम निःशेषं सकलं, 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्' इत्यमरः । कुशलं क्षेमम्, भवति वर्तते । छत्रस्य आतपत्रस्य, 'छत्रं त्वातपत्रम्' इत्यमरः । छायामनातपम्, 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । शिरसि मस्तके, वहतः भजतः, उष्मणः उष्णस्य, बाधा पीडा, सूर्यकरैः प्रभाकरकिरणैः, सन्तापः न जायते न भवति । अत्र काव्यलिङ्गमलङ्कारः ।

**हिन्दी**—हे सुन्दरी ! तुम मेरे कारण दुःखी मत होना, क्योंकि सुकुमार लता जरा भी गरम जल को सहन नहीं कर सकती । चन्द्रमौलि भगवान् शंकर की कृपा से मैं पूर्णरूप से कुशलपूर्वक हूँ, क्योंकि छाते की छाया करने से सिर के ऊपर सूर्य की गर्मी का प्रभाव नहीं पड़ता है ।

*English trans :* Abandon all anxiety. Do not undergo suffering for my sake. A fresh creeper does not deserve a sprinkling even with little hot water. I am all right by the favour of lord Shiva. One who has a shade of an umbrella on his head can have no trouble from the heat of the sun.

आगन्ताऽस्मि त्वरितमनघे ! तत्र दीपोत्सवार्थं
निर्वर्त्याऽस्यां मलयनृपतेः कार्यजातं सभायाम् ।
लक्ष्मीपूजां सविधि नियतां संविधाय प्रदोषे
क्रीडिष्यावो रजनिमखिलां द्यूतमक्षैर्यथेष्टम् ॥ ६२ ॥

**अन्वयः**—हे अनघे ! मलयनृपतेः अस्यां सभायां कार्यजातं निर्वर्त्य दीपोत्सवार्थं तत्र त्वरितम् आगन्तास्मि । प्रदोषे नियतां लक्ष्मीपूजां सविधि संविधाय अखिलां रजनिं यथेष्टम् अक्षैः द्यूतं क्रीडिष्यावः ।

**व्याख्या**—आगन्तास्मीति । हे अनघे ! पुण्यशीले ! मलयनृपतेः मलयराजस्य, अस्यां सभायां कार्यजातं कार्यसामान्यं सर्वं कार्यमित्यर्थः, 'जातिर्जातं च सामान्यम्' इत्यमरः । निर्वर्त्य सम्पाद्य, दीपोत्सवार्थं दीपावलिमहोत्सवार्थं, वर्षावसाने कार्तिकमासे दीपावलिमहोत्सवार्थं प्रायः सर्वे स्वस्वगृहं गच्छन्तीति प्रसिद्धम् । तत्र काश्मीरदेशे, त्वरितं शीघ्रम्, आगन्तास्मि आगमिष्यामि । 'अनद्यतने लुट्' । प्रदोषे अमावास्यायां प्रदोषकाले, नियतां कर्तव्यां, लक्ष्मीपूजां लक्ष्मीपूजनं, सविधि विधिपूर्वकं, संविधाय कृत्वा, अखिलां सकलां, रजनिं रात्रिम्, अक्षैः पाशैः 'अक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः । यथेष्टं यथेच्छं, द्यूतं क्रीडिष्यावः द्यूतक्रीडां विधास्यावः । दीपावलिमहोत्सवे अक्षादिभिः द्यूतक्रीडा धर्मशास्त्रविहिता सर्वत्र प्रचलति ।

**हिन्दी**—हे पवित्र चरित्र वाली प्रिये ! मलयराज की इस राजसभा में सभी कार्यों को पूरा करके दीपमालिका के दिन मैं वहाँ ( तुम्हारे समीप ) शीघ्र ही आने वाला हूँ । उस दिन सायंकाल विधिपूर्वक महालक्ष्मी जी की पूजा करके पूरी रात भर हम दोनों एक साथ बैठकर इच्छापूर्वक द्यूतक्रीड़ा करेंगे ।

*English trans* : Oh innocent lady ! Soon I shall come there for the festival of lights, having accomplished all the work in the court of the king of Malaya. After performing the worship of goddess Laxmi according to the rites in the evening we shall play with dice for the whole night to our heart's content.

इत्यात्मानं त्वमपि सुमुखि ! स्थापयित्वा प्रयत्नात्
कश्चित्कालं गमय विषमं बिभ्रती विप्रयोगम् ।
पश्चाद्भावी सुखयति भृशं सम्प्रयोगो वियोगाद्
वृक्षच्छाया दिनकरकरैरध्वनीनं यथाऽऽर्तम् ।। ६३ ।।

**अन्वयः**—हे सुमुखि ! इति विप्रयोगं बिभ्रती त्वमपि प्रयत्नात् आत्मानं स्थापयित्वा विषमं कश्चित्कालं गमय। वियोगात् पश्चाद्भावी सम्प्रयोगः वृक्षच्छाया यथा दिनकरकरैः आर्तम् अध्वनीनं भृशं सुखयति ।

**व्याख्या**—इत्यात्मानमिति । इति हेतौ, 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः । हे सुमुखि ! विप्रयोगं विरहम्, बिभ्रती भजन्ती, त्वमपि, अपिना अस्मत्समुच्चयः, अहमिव त्वमपि, प्रयत्नात् आत्मानं स्वं, स्थापयित्वा स्थिरीकृत्य, प्रकृतिं प्रापय्य, विषमं कठिनं, कश्चित्कालं, द्वित्रमासात्मकं समयं, गमय यापय । वियोगात् विरहात्, पश्चात् उत्तरम्, भावी भविष्यन्, सम्प्रयोगः संयोगः । वृक्षच्छाया दिनकरस्य सूर्यस्य, करैः किरणैः, आर्तं सन्तप्तम्, अध्वनीनं पथिकं, यथा इव, भृशम् अत्यन्तं, सुखयति सुखीकरोति । अत्र काव्यलिङ्गमलङ्कारः ।

**हिन्दी**—हे सुमुखी ! विरह-व्यथा से व्याकुल तुम भी यत्नपूर्वक अपने मन को स्थिर करके इस दो-तीन महीने के कष्टदायक समय को धैर्यपूर्वक मेरी तरह बिता डालो, क्योंकि बिछोह के बाद होने वाला मिलन उस प्रकार सुख- होता है, जिस प्रकार सूर्य की किरणों से सन्तप्त पथिक को पेड़ की छाया दायक अत्यन्त सुख पहुँचाती है ।

*English trans* : Oh lady with a beautiful face ! So you also compose yourself with effort and pass some adverse time enduring my separation. The union after the separation is very pleasant like the shade of a tree for a traveller who is scorched by the rays of the sun.

अस्मन्मित्रं तव पुनरसौ भ्रातृकल्पः पयोदः
सन्देशं मे प्रवरनगरं प्रापयिष्यत्यवश्यम् ।
श्रुत्वा वृत्तं कुशलबहुलं सर्वमस्मान्मदीयं
सम्मान्यैनं विसृज सुचिरादातिथेयं विधाय ॥ ६४ ॥

**अन्वयः**—अस्मन्मित्रं तव पुनः भ्रातृकल्पः असौ पयोदः मे सन्देशं प्रवर-नगरम् अवश्यं प्रापयिष्यति । अस्मात् मदीयं सर्वं कुशलबहुलं वृत्तं श्रुत्वा, एनं सम्मान्य आतिथेयं विधाय, सुचिरात् विसृज ।

**व्याख्या**—अस्मन्मित्रमिति । अस्मन्मित्रम् अस्माकं मित्रं सुहृद्, 'अस्मदो द्वयोश्च' इति सूत्रेण एकत्वेऽपि बहुवचनम् । तव पुनः निश्चयेन, 'स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः' इत्यमरः । भ्रातृकल्पः भ्रातृतुल्यः, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति सूत्रेण ईषन्न्यूनार्थे कल्पप्प्रत्ययः । अनेन विशेषणेन कुलवध्वा अपि तव अनेन सह वार्तालापे दोषलेशोऽपि नास्तीति सूच्यते । असौ पयोदः मेघः, मे मम, सन्देशं वाचिकम्, प्रवरनगरम् अवश्यं निश्चयेन, 'नून-मवश्यं निश्चये द्वयम्' इत्यमरः । प्रापयिष्यति आनेष्यति । अस्मात् मेघात्, मदीयं मत्सम्बन्धि, सर्वं कुशलबहुलं कुशलप्रचुरं, वृत्तम् उदन्तं, श्रुत्वा आकर्ण्य, एनं सम्मान्य सम्भाव्य, आतिथेयम् आतिथ्यं, विधाय कृत्वा, जल-पानादिकं कारयित्वा, सुचिरात् विसृज गन्तुम् अनुजानीहि । मेघनदीपर्वतादिषु सर्वत्र मूर्ताः अधिष्ठात्र्यो देवताः सन्तीति प्रसिद्धम् । अन्यथा जलरूपिण्याः गङ्गाया शन्तनुना, ताप्त्याः संवरणेन च विवाहः, भीष्मकुरुप्रभृतिजननं च न सम्भवति । एतच्च 'सर्पाः सत्रमासत, पर्वताः सत्रमासत' इत्याद्यर्थवादविचारा-वसरे मीमांसाग्रन्थेषु स्पष्टम् ।

**हिन्दी**—हे प्रिये ! यह मेरा मित्र मेघ तुम्हारे भाई के समान है । यह तुम्हारे लिए भेजे गये मेरे सन्देश को प्रवरनगर तक अवश्य पहुँचायेगा । इससे मेरा विस्तृत कुशल समाचार सुनकर, इसका सम्मान करके तथा जलपान कराकर कुछ समय बाद इसे बिदा कर देना ।

*English trans* : This cloud is my friend and he is almost your brother. He will surely bring my message to Pravarnagar. After hearing my welfare and news from him in detail please entertain him with due hospitality and then only allow him to go.

एवं बन्धो ! कतिपयसुखालापबद्धानुरागः
कृत्वा स्नेहादनुचितमपि प्रार्थनीयं ममेदम् ।
अङ्गीकुर्वन् पुनरपि निजं कार्यभारं चिरत्नं
नानादेशानुपसर सुखं प्रीणयिष्यन्महेन्द्रम् ।। ६५ ।।

**अन्वयः**—इदानीं मेघमाह—हे बन्धो ! कतिपयसुखालापबद्धानुरागः त्वम् एवम् अनुचितमपि मम प्रार्थनीयं स्नेहात् कृत्वा पुनरपि निजं चिरत्नं कार्यभारम् अङ्गीकुर्वन्, महेन्द्रं प्रीणयिष्यन् नानादेशान् सुखम् उपसर ।

**व्याख्या**—एवमिति । हे बन्धो ! कतिपयैः सुखालापैः प्रियालापैः, बद्धः सञ्जातः अनुरागः सौहार्दं यस्य सः, त्वम् एवम् अनुचितमपि अयोग्यमपि, मम इदं प्रार्थनीयम्, 'प्रियां प्रति मम सन्देशं हर' इत्येवं रूपं स्नेहात् स्नेहवशः सन्, कृत्वा विधाय, पुनरपि निजं स्वकीयं, चिरत्नं पुरातनं, कार्यभारं वर्षणादिकार्यम्, अङ्गीकुर्वन् स्वीकुर्वन्, महेन्द्रं वासवम्, प्रीणयिष्यन् तोषयिष्यन्, मम सन्देशहरणेन स्वकार्ये जातेन विलम्बेन दुर्मनसं महेन्द्रं, पुनरपि निजकार्यभारस्वीकारेण तोषयिष्यन्, नानादेशान् सुखं सुखेन, उपसर सञ्चर ।

**हिन्दी**—अब वह पुनः मेघ से कहता है—हे बन्धु ! इस प्रकार अनेक प्रकार के सुखदायक वार्तालाप से उत्पन्न स्नेह सम्बन्ध वाले तुम अनुचित भी मेरी इस ( सन्देश पहुँचाने रूप ) प्रार्थना को प्रेम-सम्बन्ध से पूरा करके फिर तुम अपने पुराने कार्यभार को स्वीकार कर देवराज इन्द्र को प्रसन्न करते हुए देश-देशान्तरों में सुखपूर्वक विचरण करना ।

*English trans* : ( Now he says to the cloud ) Oh brother ! Thus having formed a friendship with me after a hearty brief chat and following my request though it is rather improper, having done my work with affection, you can again assume the charge of your old duty and travel to different countries and satisfy your master Indra.

वाराणस्यां विहितवसतिः स्नेहपात्रं भवान्याः
कारुण्याब्धेस्त्रिपुरजयिनो गर्भदासो वसन्तः ।
काव्यं लोकोत्तरमनुसरन् कालिदासप्रणीतं
विद्वत्प्रीतिप्रदमभिनवं मेघदूतं व्यतानीत् ।। ६६ ।।

पर्यन्ते कविः श्लोकत्रयेण आत्मानं स्वकीयां रचना च एवं विशिनष्टि—

**अन्वयः**—वाराणस्यां विहितवसतिः भवान्याः स्नेहपात्रं कारुण्याब्धेः त्रिपुरजयिनः गर्भदासः वसन्तः कालिदासप्रणीतं लोकोत्तरं काव्यम् अनुसरन् विद्वत्प्रीतिप्रदम् अभिनवं मेघदूतं व्यतानीत् ।

**व्याख्या**—वाराणस्यामिति । वाराणस्यां काश्यां, विहिता कृता वसतिः निवासः येन सः, भवान्याः जगन्मातुः, स्नेहपात्रं स्नेहभाजनं, कारुण्याब्धेः करुणासागरस्य, त्रिपुरजयिनः भगवतः शिवस्य, गर्भदासः कुलपरम्परया सेवकः, वसन्तः एतन्नामा कविः, कालिदासेन प्रणीतं रचितं, लोकेषु उत्तरं श्रेष्ठम्, 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यात्' इत्यमरः । काव्यं मेघदूतम्, अनुसरन् अनुकुर्वन्, विदुषां विद्वज्जनानाम्, प्रीतिप्रदं तोषजनकम्, अभिनवं नूतनम्, मेघदूतं व्यतानीत् अकार्षीत् ।

**हिन्दी**—ग्रन्थकार का आत्मनिवेदन—सम्प्रति वाराणसी निवासी भगवती भवानी के स्नेहपात्र, त्रिपुरासुर के विनाशक, करुणावरुणालय, भगवान् शिव के गर्भदास ( कुलपरम्परागत सेवक ) पण्डित वसन्तत्र्यम्बक शेवड़े महाकवि ने कालिदास द्वारा प्रणीत लोकोत्तर मेघदूत काव्य का अनुसरण करते हुए विद्वानों के हृदय को आनन्दित करने वाले **अभिनव-मेघदूत** की रचना की ।

*English trans* : Vasant resident of Varanasi, recipient of goddess Bhavani's affection and a devoted servant of kind hearted lord Shiva, since birth has composed this Abhinava Meghdoota following the excellent poem of Kalidas, to entertain the learned persons.

सर्वज्ञस्य त्रिभुवनगुरोरिन्दुमौले: प्रसादात्
तिष्ठत्यग्रे मुकुलितकरा यस्य वैदर्भरीतिः ।
ख्यातो लोके निरुपमगुणः शेखरो यः कवीनां
स प्राणैषीदिदमभिनवं मेघदूतं वसन्तः ।। ६७ ।।

**अन्वयः**—सर्वज्ञस्य त्रिभुवनगुरोः इन्दुमौलेः प्रसादात् वैदर्भरीतिः मुकुलित-करा यस्य अग्रे तिष्ठति । लोके निरुपमगुणः यः कवीनां शेखरः ख्यातः सः वसन्तः इदम् अभिनवं मेघदूतं प्राणैषीत् ।

**व्याख्या**—सर्वज्ञस्येति । सर्वज्ञस्य विविधविद्यावदातस्य, त्रिभुवनगुरोः त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य गुरुः विद्योपदेष्टा स्वामी वा तस्य, इन्दुमौलेः भगवतः शिवस्य प्रसादात्, वैदर्भरीतिः–'माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।।' इति साहित्यशास्त्रे प्रसिद्धा । यस्य अग्रे पुरतः मुकुलितौ करौ यया सा बद्धहस्ता तिष्ठति । वशं गता वर्तते इत्यर्थः । निर्गता उपमा साम्यं येभ्यस्तादृशा असाधारणा गुणाः कवित्वशिवभक्त्यादयो यस्य सः, यः लोके कवीनां शेखरः श्रेष्ठः ख्यातः प्रसिद्धः, सः वसन्तः कविः, इदमभिनवं मेघदूतं प्राणैषीत् निरमासीत् ।। ६७ ।।

**हिन्दी**—समस्त शास्त्रों के ज्ञाता, तीनों लोकों के स्वामी चन्द्रशेखर भगवान् शिव जी की कृपा से जिसके सामने सदैव वैदर्भरीति हाथ जोड़ कर खड़ी रहती है । जो कवित्व, शिवभक्ति आदि अनुपम गुणों से संसार में प्रख्यात हैं और जो महाकवि के रूप में सुप्रसिद्ध हैं, उन वसन्तत्र्यम्बक शेवड़े ने प्रस्तुत 'अभिनव-मेघदूत' की रचना की ।

*English trans* : Poet Vasant, who is master of the Vaidarbh style of poetry ( Literally, the Vaidarbh style of poetry waits upon whom with folded-hands ) owing to the favour of omniscient Shiva, Lord of the three worlds, who is famous in the world as the foremost among the poets by his excellent qualities, has composed this poem Abhinava-Meghdoot.

देव्याः कण्ठाभरणपदवीं शारदाया दधानः
ख्यातिं यातः सरसललितैः काव्यबन्धैर्वसन्तः ।
आचामन्ति श्रवणपुटकैः सूरयो मीलिताक्षाः
साक्षाद्द्राक्षामधुरिमजुषां यस्य वाचां विलासान् ॥ ६८ ॥

**अन्वयः**—देव्याः शारदायाः कण्ठाभरणपदवीं दधानः वसन्तः सरसमधुरैः काव्यबन्धैः ख्यातिं यातः ( अस्ति )। मीलिताक्षाः सूरयः श्रवणपुटकैः यस्य साक्षात् द्राक्षामधुरिमजुषां वाचां विलासान् आचामन्ति ॥ ६८ ॥

**व्याख्या**—देव्या इति। देव्या भगवत्याः, शारदायाः सरस्वत्याः, कण्ठाभरणपदवीं दधानः वसन्तः, रसैर्भक्तिप्रमुखैः सहिताः सरसा ललिता मञ्जुलाश्च ये काव्यबन्धास्तैः, ख्यातिं प्रसिद्धिं, यातः प्राप्नोत्। मीलिते अक्षिणी यैस्ते मीलिताक्षाः काव्यश्रवणजन्यप्रमोदवशात् कूणिताक्षाः, सूरयः सहृदयाः, श्रवणानि पुटकानीव श्रवणपुटकानि, तैः यस्य साक्षाद्द्राक्षाया मधुरिमाणं माधुरीं जुषन्ते भजन्ते, इति द्राक्षामधुरिमजुषस्तासां, वाचां विलासान् आचामन्ति यथेच्छं पिबन्ति।

**हिन्दी**—भगवती सरस्वती के कण्ठाभरण पदवी (गलहार रूप) को प्राप्त, महाकवि वसन्तत्र्यम्बक शेवडे अपने सरस तथा ललित काव्यरचनाओं द्वारा पर्याप्त प्रसिद्धि को प्राप्त हो गये हैं। जिनके द्राक्षा ( मुनक्का ) की मधुरता से युक्त काव्यगत वाग्विलासों को आँख मूदकर साहित्यरस का आस्वादन करने में कुशल सहृदय विद्वान् अपने श्रवणपुटकों ( कान रूपी प्यालों ) से इच्छानुसार पान करते रहते हैं।

*English trans* : Poet Vasant, who is like an ornament in the neck of the Goddess Saraswati, has become famous in the world by his beautiful and fine poetical compositions. The learned persons, their eyes half closed with pleasure, drink with cups in the form of their ears his graceful poems which are as sweet as the grapes.

**॥ इति परममाहेश्वरेण शेवडेकुलसम्भवेन वसन्तकविना विरचिते-ऽभिनवमेघदूतकाव्ये उत्तरमेघः समाप्तः ॥**

**ग्रन्थारम्भः—भाद्रपदशुक्लसप्तम्यां रविवासरे ( २ सितम्बर १९८४ )।**

**ग्रन्थपूर्तिः—आश्विनशुक्लषष्ठ्यां रविवासरे ( ३० सितम्बर १९८४ )।**

# श्लोकानुक्रमणिका


| | पृष्ठाङ्कः |
|---|---|
| अंसोत्तंसं | १०१ |
| अत्युत्तुङ्गं | १२ |
| अत्राऽवात्सी | ४० |
| अत्रैवासीदु | ६८ |
| अध्यारूढाः | ७७ |
| अध्यारूढे | ९८ |
| अप्तः सप्तः | ३७ |
| अम्भः कुम्भात् | १०२ |
| अस्ति स्थानं | ९२ |
| अस्मन्मित्रं | १५४ |
| आक्रामन्तं | ७१ |
| आगन्तास्मि | १५२ |
| आदातुं त्वं | ५८ |
| आपृच्छ्या | ५५ |
| आम्रेडन्तो | ३२ |
| आलोक्य त्वां | ६ |
| आसीत्सुभ्रूः | १४५ |
| आसीद्यस्यां | ६६ |
| आस्ते तस्मिन् | १२१ |
| इत्यात्मानं | १५३ |
| इन्द्रप्रस्थं | ८८ |
| उत्पुच्छाग्राः | ८२ |
| उद्यानस्थाः | २७ |
| एत्याऽधस्ताद् | १२८ |
| एभिर्बन्धो ! | १२६ |
| एवं कृत्वा | ७० |
| एवं बन्धो ! | १५५ |

| | पृष्ठाङ्कः |
|---|---|
| एष ख्यातो | ९ |
| कच्चिद् बाले | १४६ |
| कर्णाटाख्यं | २८ |
| काश्मीराख्यो | ५ |
| काश्मीराणा | १ |
| काश्मीरेषु | ८ |
| किष्किन्धाख्या | २३ |
| कीरा धीरा | १२४ |
| कुक्षौ हस्ते | ७८ |
| कुञ्जा गुञ्जद् | ६३ |
| कुञ्जे कुन्द | १४८ |
| कुर्वन् सद्यः | ३९ |
| कूजत्क्रौञ्चा | ४६ |
| कूटात्तस्माद | ४३ |
| कृत्वा क्रीडां | ५१ |
| कृत्वा सह्य | १४० |
| कृत्स्नक्षोणी | ८३ |
| कैलासाद्रिं | ११३ |
| क्रान्त्वा किञ्चिद् | २१ |
| क्षेत्रं सर्वं | १७ |
| क्षेमेन्द्राद्याः | ११६ |
| ख्यातिं प्राप्तं | ४९ |
| गच्छन्नग्रे | ३० |
| गीतं तन्त्री | ७४ |
| गोदावर्याः | ४२ |
| ग्रीष्मे भीष्मे | १८ |
| चन्द्रे किञ्चिद | १४२ |

| | पृष्ठाङ्कः |
|---|---|
| चिन्तां सर्वां | १५१ |
| जम्बूवृक्षैः | ५४ |
| जित्वा युद्धे | ११० |
| जित्वा हूणान् | ११४ |
| ज्ञात्वाऽम्भोद | १६ |
| तत्राऽऽवासा | १२३ |
| तत्रोत्तुङ्गं | ११८ |
| तस्मिन् पूर्वं | २४ |
| तस्मिन् शैले | ७६ |
| तस्य द्वारे | १२० |
| तस्यां मार्ग | ८५ |
| तस्यामभ्रंकष | ६७ |
| तस्यामात्यो | ११७ |
| तस्याऽऽसन्नः | ११९ |
| तां सम्प्रेक्ष्य | २२ |
| तामाश्वास्य | १३७ |
| तामुल्लङ्घ्य | २५ |
| तामुल्लङ्घ्य | ५९ |
| तीर्त्वा तापीं | ५३ |
| तूष्णीं तिष्ठ | १३४ |
| त्वामायान्तं | २६ |
| दक्षा पूजा | १२९ |
| दूरालोके | ३१ |
| दृष्ट्वा देवं | ७२ |
| दृष्ट्वा मेघं | ३ |
| दृष्टेर्यायात्तव | १३३ |
| देव्याः कण्ठा | १५८ |

| | पृष्ठाङ्कः |
|---|---|
| देशस्तालीवन | १४ |
| द्राक्षापाकं | ९६ |
| द्राक्षा साक्षाद् | ९९ |
| द्वित्रान् मासान् | १५० |
| धृत्वा कण्ठे | ५० |
| नद्यः सद्यः | २० |
| नार्हस्येव | १२७ |
| नीत्वा दृष्टिं | ३६ |
| नूनं तस्या | ९३ |
| पर्यङ्कार्थं | १०६ |
| पश्यामि त्वां | १४३ |
| पात्रीभावं | १३ |
| पीनोत्तुङ्ग | ६२ |
| पूजाकाले | ४१ |
| प्रत्यापन्ना | १३५ |
| प्रातःसन्ध्या | ५७ |
| प्राप्ता दूरादिह | ९७ |
| प्रासादानामुपरि | ६९ |
| बद्धा तत्र | १२२ |
| बाह्यारामाः | ५२ |
| भाष्यं पातञ्जल | ९५ |
| भुञ्जाना या | १३२ |
| मज्जन्तीनां | ८४ |
| मत्वा कश्चिद् | १० |
| मत्वा तस्यां | २ |
| मां जानीथाः | १३८ |

| | पृष्ठाङ्कः |
|---|---|
| मुञ्चन् बाष्पं | ४५ |
| मेघच्छन्नं | १४९ |
| यत्र प्राप्तः | १०४ |
| यत्रोन्मील | १०० |
| यस्मिन् पूर्वं | १०५ |
| यस्मिन्नन्तः | १३६ |
| यस्मिन् राज्ञि | १०९ |
| यस्याः कूले | ४८ |
| यस्योत्तुङ्गा | १०३ |
| यातायातं | १२५ |
| यातो जेतुं | ११२ |
| यात्वा भ्रात | ३३ |
| यायाद् गोपा | ७३ |
| यो निःक्षत्रां | ३५ |
| राजन्वन्तः | ९१ |
| राजास्थाने | १३९ |
| रात्रौ बाष्प | १४४ |
| रिक्तो वृष्ट्या | ५६ |
| लक्ष्मीमाद्यां | ३८ |
| लग्ना पुष्प्यत् | १४१ |
| वक्त्रं यस्या | १३० |
| वापी कूपः | ७९ |
| वाराणस्यां | १५६ |
| वासं सारस्वत | ९० |
| वासस्थाने | ९४ |
| विन्ध्यारण्ये | ६१ |

| | पृष्ठाङ्कः |
|---|---|
| वीरश्चम्पां | १११ |
| शिप्रातीरे | ६५ |
| शृङ्गे तस्मिन् | ४४ |
| शैलं गोपाचल | ७५ |
| शैलादस्मात् | १५ |
| शैलो विन्ध्य | ६० |
| श्रीमन्मुञ्ज | ११५ |
| सत्ये धर्मो | १०८ |
| सन्दृश्यन्ते | १९ |
| सन्देशं त्वं | ७ |
| सर्गक्लेश | ८१ |
| सर्पन्नग्रे | ८९ |
| सर्वज्ञस्य | १५७ |
| सान्द्रं यस्मिन् | ११ |
| सा वैदग्धी | १३१ |
| सैषा विष्णोः | ४७ |
| सोऽयं वंशीवट | ८७ |
| स्थानं वृन्दावन | ८६ |
| स्थानात्तस्मा | ३४ |
| स्नातुं तत्र | २९ |
| स्नेहाद्वैताद | १४७ |
| स्वैरं मार्गे | ८० |
| हंहो अम्भोधर | ४ |
| हस्ते पद्मं | १०७ |
| हित्वा विन्ध्याचल | ६४ |

# महाकवि-परिचय

भगवती के परम-उपासक महाकवि पण्डित श्रीवसन्त त्र्यम्बक शेवडे विविध विषयों के विशेषज्ञ होने के कारण लोकोत्तर चरित्रवाले महापुरुषों की श्रेणी में अग्रणी हैं।

आपमें निर्मत्सरता, सदाशयता, व्यवहारचतुरता आदि अनेक ऐसे सद्गुण हैं, जिनके कारण आप सांसारिक विषयवासनाओं से सर्वथा निर्लिप्त रहते हुए भी अत्यन्त सामाजिक तथा सहृदय हैं।

संस्कृत साहित्य की सभी विधाओं में समानरूप से अधिकार रखते हुए भी आप पाश्चात्य साहित्य के भी मर्मज्ञ विद्वान् हैं। इतिहास, भूगोल जैसे विषयों पर भी आपका समान अधिकार है, जिसे देख कर सामाजिक चकित रह जाते हैं। ऐसे अद्भुत प्रतिभा-सम्पन्न महाकवि की कतिपय प्रकाशित एवं अप्रकाशित अभिनव कृतियों का परिगणन यहाँ प्रस्तुत है। इनका विशेष परिचय इसी ग्रन्थ के आरम्भ में दिया गया है।

हमारा विश्वास है, कि कालिदासीय 'मेघदूत' तथा प्रस्तुत 'अभिनव मेघदूत' का तुलनात्मक दृष्टि से रसास्वादन करने वाले विद्वान् शुद्ध अन्तःकरण से विवेचन करें तो निश्चय ही कतिपय मौलिक विशेषताएं इसमें परिलक्षित होंगी।

**प्रकाशित कृतियाँ**—१. रघुनाथतार्किकशिरोमणिचरितम्, २. वृत्तमञ्जरी, ३. विन्ध्यवासिनीविजयमहाकाव्यम्, ४. शुम्भवधमहाकाव्यम्, ५. स्तवमञ्जूषा, ६. अभिनव-मेघदूतम्, ७. श्रीकृष्णचरितम्, ८. श्रीमोतीबाबाजामदारचरितम्।

**अप्रकाशित कृतियाँ**—१. देवदेवेश्वरमहाकाव्यम्, २. स्फोटतत्त्वनिरूपणम् : तत्त्वप्रकाशिकाव्याख्या, ३. न्यायकुसुमाञ्जलेस्तत्त्वप्रकाशिकाव्याख्या।

**डॉ० ब्रह्मानन्द त्रिपाठी**

